आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९८

# धर्मतत्त्वनिर्णयः ।

वे० शा० सं० रा० महामहोपाध्यायाभ्यंकरोपाह्व-
वासुदेवशास्त्रिप्रणीतः ।

सोऽयं

वे० शा० सं० रा० मारुलकरोपाह्वरङ्गनाथभट्टात्मज-
शंकरशास्त्रिभिः संशोधितः ।

एतत्पुस्तकं

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५१

खिस्ताब्दाः १९२९



मूल्यमाणकनवकम् ( ८९ ) ।

# प्रकाशयितुराशयः ।

—:⊙:७:⊙:—

स्वाधिष्ठानेन भारतवर्षमलंकुर्वाणाः प्राचीनार्वाचीनविद्याविशारदा धर्मश्रद्धालवोऽन्ये च सद्गृहस्था विप्रवर्या ग्राहकमहाशयाश्च क्षणमत्र मनो दीयमानमभ्यर्थये । धर्मतत्त्वनिर्णयाख्यग्रन्थ आनन्दाश्रममुद्रणालये मुद्रयित्वा प्रकाश्यत इति युक्तमेवैतत् । यतः संप्रति प्रायः सर्वत्र विशेषतः पुण्यपत्तने अस्पृश्यस्पर्शप्रौढविवाहपतितपरावर्तनधर्मपरिवर्तनादिधार्मिकप्रश्नविषयिकाश्चर्चाः प्रचलिताः श्रूयन्ते । तत्र प्राचीनार्वाचीनमतानुसारेण मिथो विरुद्धा लेखाश्चापि संदृश्यन्ते । तेन च सामान्यजनानां मनो द्विधा भूत्वा कदाचित्संशयः संजायेतेत्यालोच्येहत्यैर्विद्वद्वृन्दैरन्यैश्च सद्गृहस्थैर्विप्रवर्यैर्नागरिकैः सुप्रसिद्धपण्डितप्रवरा महामहोपाध्यायाभ्यंकरोपाह्ववासुदेवशास्त्रिणोऽत्रत्यतत्त्वनिर्णये विज्ञप्ताः समभूवन् । महामहोपाध्यायैरयं, परमपूज्यमनुयाज्ञवल्क्यप्रभृतिप्राचीनमहर्षिप्रणीतधर्मावगमकवचनानां मीमांसादिशास्त्रीयन्यायानुसंधानैस्तत्त्वभूतार्थस्योन्नयनेन श्रीमद्बादरायणजैमिनिमुनिभगवत्पूज्यपादशंकराचार्यादिमहात्मप्रस्थापितस्वस्वतन्त्रीयसिद्धान्तानुसारी धर्मतत्त्वनिर्णयो नाम निबन्धो लोकोपकृतये प्राणायि । तदेतादिमं निबन्धं प्रत्यक्षीकुर्वतां विदुषां प्रत्यक्षमेव । सर्वथाऽऽनन्दाश्रमसंस्थास्थपूर्वसंप्रदायसिद्धग्रन्थमुद्रणनिर्बन्धानीषदपि नातिक्रामत्ययं निबन्ध इतीयं संस्थैतमुद्रणे प्रावर्तिष्ट लोकोपकारकत्वाच्चास्य स्वकीयग्रन्थावल्ल्यां संग्रहमन्वमंस्तेत्याशयं प्रकाश्य श्रीमत्सच्चिदानन्दचरणयोः समर्पयत्येतन्निबन्धरूपं पुष्पं वार्षिकोत्सवसमये प्रकाशकः—

| | |
|---|---|
| पुण्यपत्तने वै० कृ० १३ शके १८५१ | आपटे कुलोद्भवो गणेशात्मजो विनायकरायः— ( आनन्दाश्रम–म्यानेजिंगट्रस्टी ) |

# प्रास्ताविकं किंचित् ।

—∞—

इह खलु जगति सर्वोऽपि जनिमान् निसर्गत एव स्वसमुन्नतिं सर्वात्मना वाञ्छतीत्येतत्तावन्निर्विवादम् । समुन्नतिश्चाकारणिकायाः कार्योत्पत्तेरसंभवात्किंचित्कारणमपेक्षत एव । तच्च कारणं किमित्याकाङ्क्षायां तत्र तन्निरासकत्वेन श्रुतिस्मृत्यनुसंहितो धर्म एव नान्यः कश्चनेति सर्वैर्दार्शनिकैरन्यैश्च प्रेक्षावद्भिरैकस्वर्येण जोघुष्यते । श्रुतिस्मृती अपि ' तानि धर्माणि प्रथमान्यासन् ' ' धर्मे सर्वं प्रतिष्ठितम् ' इति व्यक्तं ब्रुवत्यौ सकललोकसमवस्थितिहेतुत्वेन धर्ममेवावगमयत इति नैतत्परोक्षं प्रेक्षावताम् । अतस्तादृशस्य निखिलजनसमाजसर्वाङ्गीणसमुन्नतिहेतुभूतस्य धर्मस्य यथार्थं स्वरूपं कीदृगस्ति तद्याथात्म्येन लोकानां मनस्याविर्भवत्वित्युद्दिश्यायं धर्मतत्त्वनिर्णयः स्वात्मानमासादितत्वान् । यदि चास्मै तत्त्वनिर्णयायाऽऽनन्दाश्रमसंस्थया स्थानं न दत्तं स्यात्तर्ह्यस्य सर्व एवायं स्वात्मासादनप्रयासो

व्यर्थो जातः स्यादिति सदग्रेसरेभ्य एतत्संस्थाध्यक्षेभ्य आपटेकुलोद्भवविनायकरायमहोदयेभ्यः शतशो धन्यवादान्वितीर्य निबन्धविषये प्रास्ताविकं किंचित्प्रस्तूयते—

यद्यप्येतर्हि सर्वेषां लोकानां प्रवृत्तिः प्रायः स्वच्छन्दमाहारविहाराद्यनुष्ठान एव संदृश्यते । ततश्च तैर्धर्मस्वरूपं याथातथ्येनावगतमपि न तस्य कश्चिदुपयोगो वक्तुं शक्यः । तथाऽपि चाण्डालस्पर्शपुनर्विवाहप्रभृतयः सर्वथा शास्त्रनिषिद्धा इति लोकानां बुद्धौ दृढायां संजातायां दशस्वेकोऽपि ततः परावर्तेत । तथा सति तावतैव च कृतकृत्योऽयं निर्णय इति धन्यवादार्हः खलु महामहोपाध्यायानां समुद्योग इति मंस्ये । यतः सांप्रतं करालकलिकालकलुषितमतयः केचन निरर्गलसंगिरणनिपुणाः 'चाण्डालस्पर्शो न शास्त्रविरुद्धो बालविवाहो न शास्त्रसंमतः' इत्यादिकमधर्म्यं स्पष्टं ब्रुवाणा व्याख्यानद्वारा पुस्तिकाप्रकाशनद्वारा वा स्वमतं सर्वत्र प्रथयन्तो दृश्यन्ते । तेन च मध्यमबुद्धीनां जनानां कदाचिद्भ्रमः संजायेत ।

चण्डालस्पर्शो यद्यप्युच्छास्त्रीयस्तथाऽपि सांप्रतिकव्यवहारसरणौ दृशि प्रहितायामस्पृश्यस्पर्शस्य दोषापादकत्वेन निषिद्धत्वमुररीकृत्य सर्वथा व्यवहर्तुमेवाशक्यं मनुजैरित्यालपन्तो दीना जनाः सत्यं तदपेक्षया मनाक्प्रियाः । यतस्तदुपदेशतो दशसु पञ्चोच्छृङ्खला यर्ह्यपि तादृशे शास्त्रगर्हिते वर्त्मनि प्रवृत्ता भवेयुस्तर्ह्यपि येऽन्त्यजस्पर्शः शास्त्रविरुद्धो नेति व्यक्तं सभायामप्याचक्षते तदुपदेशतो दशसु पञ्चभ्योऽप्यभ्यधिका निश्चितं तत्र निःशङ्कं संचरेयुः ।

अथ येऽस्पृश्यस्पर्शप्रौढविवाहपतितशुद्ध्यादिकतिपयसंप्रतिप्रचलितार्थविषयकतयोद्भाविता विचारास्तत्र च प्रमाणत्वेनोद्धृतानि कतिचन वचांसि चेत्येतत्सर्वं समञ्जसं न तत्राऽऽक्षेपलेशशङ्काया अप्यवसरः परंत्वगतिकत्वाद्व्यवहारवर्तन्यां न वयं तदनुसारेण वर्तितुं संप्राति पारयाम इत्येवं ये प्राञ्जलतयाऽनुसंगिरन्ते तेषां कृते न मम काचन विवक्षाऽस्ति । तथाऽपि शास्त्रीयदृशैव निरीक्षणे क्रियमाणे निरुट्टङ्किता विचाराः प्रमाणवचनानि च नैवातीव समञ्जसतामावहन्तीति येषां निर्मत्सरमतीनां प्रतिभासते तदर्थं ममैतावत्येव विवक्षा यदत्रोपक्षिप्तानां निर्णयानां प्रमाणवचसां च मध्ये यदि कतिपये निर्णयाः कतिपयानि प्रमाणवचनानि च मान्यतापदवीमारोढुमर्हाणि स्युश्चेच्छिरआन्दोलनेन तद्विषये संमतिं प्रकटय्य ये निर्णया यानि च प्रमाणानि न भवदनुमोदनभाञ्जि भवन्ति तेषामननुमतौ समुचितानि शास्त्रीयाणि कारणानि उद्घाटयन्तु भवन्तः ।

यदि च मान्यताप्रदर्शनं नेच्छन्ति भवन्तस्तर्हि येषु प्रमाणवचःसु विरोधिकारणानि नाऽऽवेदितानि भवेयुस्तान्यखिलान्यपि श्रीमतां तत्रभवतां भवतां संमतान्येवेति स्वीकरणेऽस्माकं पन्था अप्रतिबन्धोऽस्तु । एवं तज्ज्ञैः पण्डितैर्यत्र यत्र प्रमाणविषये स्वःसंमतिः प्रकटिता तत्र तत्र वयं निःशङ्काः सन्तस्तदितरवचःसु पुनरपि समुचितविचारोद्भावने निबन्धप्रणेतॄन्महामहोपाध्यायान्प्रार्थयेमहि ।

येषां त्वेतत्सर्वमेवाननुमतमिति मतं तैः सर्वत्रैव प्रमाणवचनविषये यथायथं शास्त्रानुसारिणो हेतवो निर्देष्टव्या इति सविनयं साञ्जलिबन्धं च तत्रभवतः सर्वान् विज्ञापयामि।

यतः संप्रत्येवमनुभूयते यत्तज्ज्ञेनापि कश्चन तत्त्वभूतोऽर्थः सप्रमाणं प्रस्थापितोऽपि तत्र विकृतमतिना विप्रतिवादिना केनचिदहंमन्येन तदङ्गभूतक्षुद्रार्थविषये शब्दच्छलाद्याश्रयणेन वैतण्डिकतया सर्वतः कोलाहलः क्रियते। विरोधिनो लेखाश्च लिख्यन्ते। तदिदं बिलेशयचपूचपायितमित्युपेक्ष्य मूललेखकेन तूष्णींभावः समालम्ब्यते चेत्तादृशात् तूष्णींभावादज्ञजनानां तद्विषयेऽन्यथैव मतिर्जायते। तत इयं निरुक्ता विज्ञप्तिर्भोगिनी भवति।

अथ वितण्डवादिनां केषांचित्संसद्विषयकानाक्षेपान् स्वरूपव्याक्रियैव पराक्रियेति न्यायेन तेषां तुच्छत्वप्रदर्शनार्थं निर्दिदिक्षामः। तत्र केचिदसहिष्णवो यद्वा तद्वा प्रलपन्तः पण्डितंमन्याः शास्त्रीयनियमानुसारिण्यामपि सभायां किमपि किमप्याक्षिपन्ति। यदियं सभा न सर्वजनीना, यतस्तत्र न स्तनंधया न पामरा न योषितो न शूद्रा नाप्यन्त्यजाः। तस्मादसंमतेयं सभाऽस्माकमिति वदन्ति। परे तु तादृशैः सभासदैर्भाव्यं नेदृशैः। व्यवस्थापकमण्डली चेदृश्यपेक्ष्यते न तादृशी। सन्ति त्वीदृशा अस्ति च तादृशीत्यमान्या सभेति ब्रुवते। इतरे पुनरध्यक्षास्ते ते नैत एते। मध्यस्थाश्च वादिप्रतिवादिभ्यां न नियोजिताः किंत्वध्यक्षैरेवेत्यतो नास्यां सभायां भागं ग्रहीतुमिच्छाम इत्यादि भाषमाणा अन्यत्र गत्वाऽज्ञसमाजे स्वप्रौढिवादान्गायन्ति श्रुतिस्मृत्यादिविरुद्धं च तत्र स्वाच्छन्द्येनास्पृश्यस्पर्शप्रौढविवाहजातिपरिवर्तनादयः प्रस्तावाः शास्त्रसंमता एवेति परितो वल्गन्ति। किमयं व्यामोहः किंवा दैवदुर्विलास आहोस्वित्करालकलिकालविपाकः। अथवा किमन्यत्—

> येषामभिनिवेशेन संक्रान्ता मतिरङ्गभूः।
> असंशयं तत्र नटो भ्रमः स्वैरं प्रनृत्यति ॥

इत्येव सत्यम्। यतो वादिप्रतिवादिभ्यां मध्यस्थनियोजनं सर्वथा युक्तिविरुद्धम्। तथाहि। ये मध्यस्था वादिना नियोजितास्ते प्रतिवादिनो न संमता भवन्ति पक्षपातित्वभिया। तथा प्रतिवादिना नियोजिता न वादिनः संमता भवन्ति। अथार्धाश्च वादिनाऽर्धाश्च प्रतिवादिना इत्यपि न संभवति। पक्षपातित्वसंभावनया ह्यर्धार्धनियोजनमुभयेषाम्। पक्षपातित्वसंभावना च मध्यस्थत्वविरोधिनी। ये च पक्षपातिनस्ते वादिन एव प्रतिवादिन एव वा न मध्यस्थाः। अतः प्राड्विवाकेनैव स्वसाहाय्यार्थं मध्यस्था नियोज्या भवन्तीति।

तथा धर्मस्वरूपविचारार्थं या याः परिषदो निर्मीयन्ते तत्र परिस्थितिमनुसृत्य नैव विचारः क्रियत इत्यप्याक्षिपन्ति। तद्विषये किंचिल्लिख्यते। परिस्थितेः सम्यक्त्वे

तत्पोषकविचारस्य परिस्थितेरसमीचीनत्वे तद्बाधकविचारस्य चावसरः। पोषको विचार एव परिस्थित्यनुरूपस्तद्बाधकस्तु न परिस्थित्यनुसारीति न राजाज्ञाऽस्ति। अन्यथा मद्यपानप्रतिबन्धकस्य विचारस्य प्रयत्नस्य वा परिस्थित्यननुसारित्वप्रसङ्गात्। स तु सर्वसंमत इति लोके प्रसिद्धम्। तत्रेयान् विशेषः। पोषको विचारो वृद्धिकरः। बाधकः क्षयकरः। परिस्थित्यनुसारित्वं तूभयोः सममेवेति।

यच्चाप्युद्घोष्यते यत्रास्पृश्यस्पर्शपतितशुद्धिजातिधर्मपरिवर्तनरूपान्तरापन्नमिश्रविवाहादिविषयकाः परिस्थितिपोषकाः समयाः संजायन्ते सैवैका परिषत्पारिस्थित्यनुसारिणीति। तत्राप्येवं विचार्यते। तादृशपरिस्थितेः समीचीनत्वं कथमवगतं भवद्भिः। किं शास्त्रतो लोकतो वा। न तावच्छास्त्रतः। बह्वीषु स्मृतिषु अस्पृश्यस्पर्शादिनिषेधस्य परिदृश्यमानत्वात्। किं चास्पृश्यस्पर्शस्य शास्त्रसंमतत्वे पूर्वं (शिवाजीराज्यकाले पेशवाख्यराजकाले वा) ये शास्त्रतत्त्वज्ञाः प्रसिद्धा महापण्डिता आसंस्तैरयं विचारोऽवश्यं कृतः स्यात्। प्रत्युत शास्त्रानुवर्तित्वादस्पृश्यस्पर्शस्य निषेधमेवानुमेनिरे। यतस्तदानीं सर्वाऽपि व्यवहारप्रवृत्तिः सविशेषं धर्मशास्त्रानुसृतैवावर्ततेति नैतत्तिरोहितमितिहासपरिशीलनपटूनाम्। अस्पृश्यस्पर्शस्य शास्त्रसंमतत्वे किमिति तदानीं कैरप्यस्पृश्यानामस्पृश्यत्ववर्जनप्रस्तावो नोपक्षिप्तः किमिति च तदनुसारेण कैश्चिदपि न ते स्पृश्याः संपादिताः। येन भवतामयं प्रसङ्ग एव न प्राप्नोति स्म। न च तदानीं तेऽस्पृश्या एव सन्तो न स्वोत्कर्षं साधयितुमलमभूवन्निति वचनं युक्तिसहम्। यो यज्जात्युचितमर्यादामनुरुध्य दूरं समीपं वाऽवस्थाय स्पर्शास्पर्शमकुर्वन्स्वस्वजातिविहितसमुदाचारैः करुणावरुणालयं परमेश्वरमनन्यभावेन सेवते स स्वोत्कर्षाय कल्पत एव। चोखामेळारोहिदासप्रभृतयश्चात्रोदाहरणत्वेनाद्ययावज्जाग्रति। नह्येतैरस्पृश्यजात्युद्भवैर्गुणेनेतरेभ्यो विशिष्टं महत्त्वं संपादितमिति कृत्वाऽपि केऽपि तान्स्पृश्यान्कृत्वा धर्मसंकरं जातिसंकरं वाऽऽरचयांबभूवुः।

किंच तदानीं तेऽस्पृश्याः समाजघटका एव नाऽऽसिषतेति ब्रूयुश्चेत्तदपि बालसंमोहनमात्रम्। केन नाम कर्मणा समाजघटकत्वमभिप्रेयते श्रीमद्भिः। मिथः संस्पर्शमात्रेणेति चेत्—शरीरेऽपि तावदेतादृशानि कतिचन इन्द्रियाणि सन्ति यत्तेषां स्पर्शे हस्तमप्रक्षाल्य नैव केऽपि भुञ्जते। न च तावता तेषां शरीरघटकत्वं प्रतिक्षेप्तुं कोऽपीहते। किंच लवणशिखरिण्यादीनां परस्परं संसर्गोऽपि न कैश्चिदपीष्यते। तथाऽपि तेषां भोज्यपदार्थसमुदायघटकत्वं नास्तीति ब्रह्मणाऽपि वक्तुं युक्तम्। तच्च तेषामागोपालं प्रसिद्धमेव। तस्मात्संघातभावेनावस्थितानां सर्वेषां परस्पराविरोधेनैककार्यनिष्पादकत्वमेव तदिति वक्तव्यम्। अस्ति च शरीरसंधारणरूपैककार्यजनकत्वं हस्तपादाद्यवय-

वानां भोजनलक्षणैककार्यनिष्पादकत्वं च लवणशिखरिण्यादीनाम् । तद्वत्परस्परापीडनेन पूर्वसंप्रदायाविरुद्धस्वस्वजात्युचिताचारनिर्बन्धपरिपालनेन मानवसमाजसंरक्षणलक्षणैककार्यकर्तृत्वेन समाजघटकत्वं तेषामप्यस्त्येवेति ।

अथास्पृश्यस्पर्शस्य लोकतः समीचीनत्वमगवम्यत इति ब्रूध्वे चेत्तदप्यसंगतम् । लोकेष्वपि ये दूषितान्तःकरणा अत्यन्तमविवेकिनो महत्त्वाकाङ्क्षाग्रहग्रस्ताः प्राज्ञंमन्यास्त एव द्वित्रा अस्पृश्यतावर्जनं कार्यमिति क्वचित्प्रलपन्ति न तु समाजघटकाः सर्वेऽपि । रत्नागिर्यादिकौङ्कणप्रदेशेषु अद्यापि तत्रत्या द्विजादयो जलीयधूमशकटेन वा स्थलीयधूमशकटेन वेतो गतानतएव नान्तरीयकपारम्परिकाद्यस्पृश्यस्पर्शसंभावनयाऽपि दूषितान् विना स्नानं न प्रवेशयन्ति गृहम् । अस्पृश्याश्च तत्रस्था ब्राह्मणादिविशिष्टजातीयानां गृहारामादिषु देवालयादिषु वा प्रवेशेनामुत्रास्माकं महदप्रियं भवेदिति भयेन न प्रतिशन्ति तदावासप्रदेशम् । किंच कार्यान्तरमुद्दिश्य वर्त्मना गच्छन्तस्तेनैव मार्गेण प्रत्यागच्छन्तं द्विजातिं यदि स्वच्छाययाऽपि स्पृशेम यदि वा तादृशास्मत्संस्पर्शपरिहारार्थं विशिष्टं ब्राह्मणं कुटिलेन पथा गमयेम तदा वयमपराधिनः स्यामेति मत्वा छायासंस्पर्शपरिजिहीर्षया सद्य एव स्वयमध उपविशन्तीत्यपि नाविदितमस्पृश्यत्ववर्जनवादिनां भवताम् । अपि चास्पृश्येष्वपि बहवो जातयः श्रूयन्ते । न तासु सर्वासु परस्परं स्पृश्यत्वम् । तेष्वप्युत्तमाधमभावो विद्यते । तत्रोत्तमजातीयेनाधमजातीयैः सह न संस्पर्शः सह खानपानादिकं वाऽनुष्ठीयत इति सुप्रसिद्धमेवैतत्सर्वत्र । यदाऽस्पृश्येष्वेवेत्थं निर्बन्धो दृश्यते तत्र लोकतोऽस्पृश्यस्पर्शसामीचीन्यवाचोयुक्तिः कथमिव विश्वसनीया स्यादिति भवन्त एव विचारयन्तु । तथाऽप्यस्पृश्यस्पर्शसामीचीन्यस्य लोकतः समर्थने दुराग्रहश्चेल्लोकव्यवहारनिदर्शनेनैव तस्य पुष्टिः सभायां विधेया स्यात् । वृथा तत्र शास्त्रसंमतत्वोद्घोषणेन किम् । केवलं वञ्चनैव सा ।

यच्च यात्रादिषु स्पृष्टास्पृष्टिर्न विद्यत इत्युच्यते तत्स्थलविशेषविषयं स्पर्शविशेषविषयमशुचित्वावस्थायां निषिद्धस्यापि गलाधोमुखान्तःस्थितजलप्रवेशस्य नान्तरीयकतया जायमानस्यादूषकत्वमात्रप्रतिपत्त्यर्थं च नतु सर्वसामान्यतस्तस्य प्रवृत्तिः । उपारिनिर्दिष्टभवत्संमतपरिस्थित्यनुसारिपरिषदि तु तस्य सामान्यतः प्रवृत्तिरनुमता भवतीति चित्रम् । तत्र वचन एव श्रुतेषु यात्रादिशब्देषु कथमौदासीन्यमाद्रियते । अथवा भ्रमादीनामयं विलासः स्यात् । तदुक्तम्—

‘समागमो यत्र भवेदसूयाभिनिवेशयोः ।
संक्रीडन्ति सुतास्तत्र स्वैरं क्रोधमदभ्रमाः ’ इति ।

इदानीमेतर्हि प्रचलिताः प्रौढविवाहास्पृश्यस्पर्शादयो ये विषयास्तत्संबन्धेन किंचिदिव

विचारयामः। अत्र निबन्धे महामहोपाध्यायैः स्मृतितात्पर्यं याथार्थ्येन बोध्यते। किमर्थमयं विचार इति चेदुच्यते—

अनेन विचारेण जनाः संबोधनीया भवन्ति। जनास्त्रिविधाः। सनातनवैदिकधर्मपक्षपातिनः शत्रव उदासीनाश्च। तत्राऽऽद्या यद्यपि श्रद्धाजाड्येन सदाचरण उपदेशं विना प्रवृत्ता एव तथाऽपि शत्रूणां वाचोयुक्तीर्निशम्य कदाचित्संशयितान्तःकरणा भवेयुः। शते द्वित्राणां च तादृशां प्रवृत्तावपि कदाचिच्छैथिल्यं भवेदतस्ते संबोधनीया भवन्ति।

तथा शत्रुभिर्बोधितानामुदासीनानां सदाचरणे प्रवृत्तिरपि दुर्लभा भवेत्। अतस्तेऽपि संबोधनीया भवन्ति।

शत्रवस्तु केचिदेव संबोधनीया भवेयुर्न सर्वे। तथा हि। शत्रवो द्विविधा बाह्या आभ्यन्तराश्च। तत्र य इत्थं ब्रुवन्ति—ऋतुदर्शनानन्तरं विवाहश्चाण्डालस्पर्शः पुनर्विवाह इत्यादीनां (मन्वादि) स्मृतिषु निषेधो दृश्यते। सांप्रतं तु ऋतुदर्शनोत्तरं विवाह इत्यादिकमावश्यकं दृश्यते। अतस्ताः प्राचीनाः स्मृतयोऽप्रमाणमिति मत्वोपेक्षणीया इति, ते बाह्याः शत्रवः। ये चेत्थं ब्रुवन्ति 'मन्वादिस्मृतयः प्रमाणमेव' किंतु सांप्रतमावश्यका येऽर्थाः प्रौढविवाहचाण्डालस्पर्शादयस्ते तासु मन्वादिस्मृतिषु न निषिद्धा इत्येवं स्मृतितात्पर्यं वर्णनीयमिति, त आभ्यन्तराः शत्रवः।

तत्र बाह्यैः शत्रुभिः स्मृतिप्रामाण्यं तिरस्कृतवद्भिरपि स्मृतितात्पर्यार्थो याथात्म्येन गृहीत इत्येतावतोपकृतमेव। तथाऽऽभ्यन्तरैः स्मृत्यर्थं विपर्यासेन प्रतिपादयद्भिरपि स्मृतिप्रामाण्यं पुरस्कृतमित्येतावतोपकृतमेव।

आभ्यन्तरेष्वपि केचिद्गृहभेदिनो वञ्चका इव स्मृतितात्पर्यं याथात्म्येन जानन्तोऽपि लोभादिपरवशाः सन्तो हठात्स्मृत्यर्थविपर्यासं कुर्वन्ति। केचिच्च भ्रान्ताः स्मृतिवचनानां याथार्थ्येन तात्पर्यमजानानाः स्मृतिवचनानामर्थं वैपरीत्येन प्रतिपादयन्ति।

तत्र बाह्याः शत्रवः स्मृतिप्रामाण्यमेव नाङ्गी कुर्वन्ति, अतस्ते न संबोधनीया भवन्ति। तथाऽऽभ्यन्तरा अभ्रान्ताः शत्रवोऽप्यभिनिवेशग्रहग्रस्तत्वान्न संबोधनीया भवन्ति। ये च भ्रान्ता आभ्यन्तराः शत्रवस्ते संबोधनीया भवन्ति। उदासीनास्तु प्रायेण सर्वेऽपि संबोधनीया एव। तत्राऽऽभ्यन्तराः शत्रव आभ्यन्तरव्याधिवन्न सुखोच्छेद्या भवन्तीति विनिवेद्य पूर्वोक्ता विज्ञप्तिर्न विस्मृतिं नेतव्येति सप्रणयं सविनयं च प्रार्थयते—

पुण्यपत्तने वै० कृ०<br>१२ श० १८५१

मारुलकरोपाह्वः शंकरशास्त्री-भारद्वाजः।

ॐ तत्सद्ब्रह्मणे नमः ।

# धर्मतत्त्वनिर्णयः ।

---

## ( धर्मस्वरूपविचारः )

अभिनिवेशवशीकृतचेतसां बहुविदामपि संभवति भ्रमः ।
तदिह धर्मरहस्यमिदं बुधाः सहृदया विमृशन्तु विमत्सराः ॥

अथ धर्मतत्त्वं निरूप्यते—धर्मस्य लक्षणं हि 'चोदनालक्षणोऽर्थो धर्मः' इति मीमांसका वदन्ति । विहितकर्मजन्यो धर्म इति तार्किका वदन्ति । सर्वथाऽपि धर्मस्य मूर्तं किंचित्स्वरूपं न कैश्चिदप्यभ्युपेयते, अमूर्तो धर्म इति सर्वसंमतम् । अतः स न बाह्यप्रत्यक्षगोचरः । सुखादिवदान्तरप्रत्यक्षगोचरोऽपि न भवति । अयोग्यत्वादित्यत्रापि न विवादः । एवमलौकिकस्वरूपस्य धर्मस्य प्रज्ञापनाय न प्रत्यक्षं प्रमाणं प्रक्रमते किं त्वनुमानादिकम् ।

नन्वनुमानमप्यत्र न प्रक्रमते । अनुमानं हि व्याप्तिमुपजीव्य प्रवर्तते । व्याप्तिनिश्चयश्च कार्यकारणभावसामान्यविशेषभावज्ञानाधीनः । यदि च धर्मस्य स्वरूपमेव लोकतो नावगम्यते कुतस्तस्यान्येन केनापि सह कार्यकारणभावः सामान्यविशेषभावो वाऽवगतः स्यादिति चेन्न । शास्त्रतः कार्यकारणभावस्यावगम्यमानत्वात् । तथाहि—ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि शास्त्रं स्वर्गज्योतिष्टोमयागयोः कार्यकारणभावं प्रतिपादयति । यागस्य चाऽऽशुविनाशित्वात्स्वर्गस्य च देहविनाशोत्तरं प्राप्यमाणत्वात्तयोर्यौगपद्यासंभवात्कार्यकारणभावोऽनुपपन्न इत्यतस्तत्रादृष्टं मध्ये किंचित्कल्पनीयम् । तद्द्वारैव च स्वर्गयागयोः कार्यकारणभावो न साक्षात् । साक्षात्कार्यकारणभावस्त्वदृष्टस्यैव । अदृष्टं हि यागस्य साक्षात्कार्यम् । स्वर्गस्य च साक्षात्कारणम् । अमुमेव च कार्यकारणभावमुपजीव्य व्याप्तिज्ञानद्वाराऽनुमानप्रमाणस्य धर्मज्ञापने प्रवृत्तिः सुलभा भवति । उक्तं मध्ये प्रकल्पितमदृष्टमेव च धर्म इत्यभिधीयते । तथा चात्राथ तत्पूर्वकम् ( गौ० सू० १ । १ । ५ ) इति सूत्रोक्तं पूर्ववदिति शेषवदिति चेति द्विविधमप्यनुमानमत्र प्रवर्तते । यत्र कारणेन कार्यमनुमीयते, यथा मेघोन्नत्या भविष्यति वृष्टिरिति तत्पूर्ववदिति गीयते । अत्र च यागेन कारणेन भाविनो धर्मस्यानुमानम् । यत्र कार्येण कारणमनुमीयते, यथा नद्याः पूर्णत्वं दृष्ट्वा भूता वृष्टिरिति तच्छेषवदिति गीयते । अत्र च कस्यचित्स्वर्गप्राप्तिमनुनिशम्य तेन कार्येण भूतस्य धर्मस्यानुमानम् । एतादृशं च श्रुत्यादिसिद्धकार्यकारणभावावलम्बिनाऽनुमानप्रमाणेन प्रज्ञाप्यमानममूर्तमदृष्टं धर्मस्वरूपं कथमिदानींतनैः पण्डितैरपि स्वातन्त्र्येण परिवार्तितुं शक्यं भवेत् ।

## ( कन्याविवाहकालविचारः )

यत्तु सांप्रतं परिस्थित्यनुसारेण रजोदर्शनोत्तरमेव विवाहस्य मुख्यः कालः । मन्वादिस्मृतयस्तु लक्षणाद्याश्रयणेनार्थान्तरं प्रकल्प्य कथंचिद्योज्या इत्येवं धर्मः परिवर्तनीयः । अथवा ताः स्मृतयोऽप्रमाणमेवेति मत्वा परित्याज्या एव । देशकालपरिस्थित्यनुसारेण पूर्वं यथा मन्वादिभिः स्मृतयः प्रणीतास्तथेदानींतनैरन्याः स्मृतयः सांप्रतिकपरिस्थित्यनुसारेण प्रणेयाः । नहि स्मृतिप्रणेतृत्वं मन्वादीनामेवेति नियमोऽस्तीति । तन्न । लक्षणाद्याश्रयणेनार्थान्तरकल्पनया स्मृत्यर्थयोजनं न समीचीनम् । लक्षणा हि तात्पर्यानुपपत्त्या भवति । रजोदर्शनात्प्रागेव विवाहः कार्य इति वदतां स्मृतिकाराणां रजोदर्शनानन्तरं विवाह इत्यर्थे तात्पर्यमिति कस्मादवगतम् । येन विपरीतलक्षणा स्यात् । तेषां तथा तात्पर्यं चेत्किमिति ते तथा स्पष्टं न ब्रुवन्ति ।

## ( अभिनवस्मृतिविरचनाविचारः )

अथ मन्वादिभिरिवाऽऽधुनिकैरभिनवाः स्मृतयः परिस्थित्यनुसारेण प्रणेया इति । तदपि न । मन्वादिभिस्तादात्विकपरिस्थित्यनुसारेण स्मृतयः प्रणीता इत्यत्र न प्रमाणमुपलभामहे । स्मृतिकारैर्हि लौकिका अलौकिकाश्चार्थाः प्रतिपादिताः । दृष्टप्रयोजनका लौकिकाः । अदृष्टप्रयोजनका अलौकिकाः । यथा विवाहप्रकरणे परिणेयकन्याविशेषणेषु कान्तां भ्रातृमतीमरोगिणीमित्यादयोऽर्था लौकिकाः । असगोत्रामसपिण्डामित्यादयोऽर्था अलौकिकाः । तत्र मन्वादिस्मृत्यनुक्ता मन्वादिस्मृतिविरुद्धा वा येऽर्था इदानींतनैरभिनवासु स्मृतिषूपनिबद्धव्यास्ते लौकिका अलौकिका वा । अलौकिकाश्चेददृष्टफलेन तेषां कार्यकारणभावरूपः संबन्धः कथमवगतः । अदृष्टावगतिर्हि श्रुत्यादिबलाद्योगजा लौकिकप्रत्यक्षबलाद्वा भवति । श्रुतिबलाच्चेत्सा श्रुतिर्मन्वादिभिः स्मृतिकारैर्दृष्टा न वा । दृष्टा चेत्कुतस्तदर्थः स्मृतिषु नोपनिबद्धः । औदासीन्ये कारणाभावात् । न दृष्टा चेन्मन्वादीनां स्मृतिकाराणामनुपलब्धा श्रुतिरिदानींतनैर्दृष्टेत्यर्थे जना नैव विश्वस्युः । स्मृतिबलाच्चेत्स्मृतिष्वनुक्तार्थस्य प्रतिपादनायाभिनवस्मृतिप्रणयनमिति व्याहतं स्यात् । योगजबलाच्चेत्तादृशसामर्थ्यास्तित्वं प्रत्यायनीयम् ।

अथ लौकिका अर्था इदानींतनैरभिनवासु स्मृतिषूपनिबध्यन्त इत्युच्यते तर्हि कान्तां भ्रातृमतीमरोगिणीमित्यादयो ये लौकिका अर्थाः प्राचीनस्मृतिषूपनिबद्धास्तद्विरुद्धोऽर्थ इदानीं लोकावगतोऽपेक्ष्यते । स च न संभवति । नहीदानींतनैर्भिषग्रत्नभूतैर्डाक्तरैर्त्युपपद्धारिभिर्वा संप्रति अकान्ता ज्यायसी रोगिणी वा वधूर्विवाह्येत्युच्यते ।

ननु प्राचीनस्मृतिषु ये येऽर्था उपनिबद्धास्तत्र तत्र सर्वत्रैवाऽऽधुनिकैरभिनवविरच्यमानासु स्मृतिषु विरुद्धोऽर्थो वक्तव्य इति नोच्यते क्वचिदेव विरुद्धोऽर्थ उच्यते। यथा प्राचीनस्मृतिषु रजोदर्शनात्प्रागेव विवाह्येत्युक्तमभिनवस्मृतिषु तु रजोदर्शनानन्तरमेव विवाह्येति।

( धर्मपरिवर्तनविचारः )

नैतत्। आदौ तावदयमर्थो न लौकिकः। सोमाद्युपभोगभिया हि रजोदर्शनात्प्राग्विवाह इति तैरुच्यते। नहि सोमादिभिः क्रियमाण उपभोगस्तज्जन्यदोषो वा लोकतोऽवगम्यते। तथा च सांप्रतं धर्मपरिवर्तनमवश्यं कार्यमिति यैः पुनः पुनरुद्घुष्यते त इत्थं प्रष्टव्या भवन्ति। सूत्रकारैः स्मृतिकारैर्वा अलौकिको योऽर्थः प्रतिपादितः स परिवर्तनं नार्हत्येव। अदृष्टस्योत्पत्तिः कीदृशेन कर्मणा कथं वा भवतीत्यस्याज्ञानात्। नहीदानींतनाः पण्डिता एवं कृते सदपूर्वमुत्पद्यत एवं च कृत इदमसदपूर्वमुत्पद्यत इति स्वाच्छन्द्येन निश्चेतुं प्रभवन्ति। यश्च लौकिकालौकिकोऽर्थः सूत्रकारैः स्मृतिकारैश्च प्रतिपादितस्तत्राप्येवमेव। एक एव योऽर्थो लौकिकः सन्नलौकिकोऽपि भवति स लौकिकालौकिकः। तत्रालौकिकांश उक्तरीत्या कार्यकारणभावो नैव ज्ञातुं शक्यो भवतीदानींतनैः। यश्च लौकिकोऽर्थः सूत्रकारादिभिः प्रतिपादितः स यादृशकार्यकारणभावाभिप्रायेणोक्तस्तादृशकार्यकारणभाव इदानीं लोकेऽनुभवपद्वीं नाऽऽपद्येत चेत्स लौकिकोऽर्थो विपरिवर्तनमर्हति। किंतु सूत्रादिष्वीदृशः कोऽर्थः कश्च तत्र सूत्रकाराद्यभिप्रेतः कार्यकारणभावः कथं चेदानीं स नानुभूयते किं स्वाभाविकं तत्तद्वस्तुसामर्थ्यं विगलितं वा कश्च तत्र नियातिकृतो नियम इत्येतत्सर्वं प्रदर्शनीयम्।

इदानीं च धर्मपरिवर्तनकामैः परिवर्तनार्हत्वेनानुसंहिता येऽर्थाश्चाण्डालस्पर्शनिषेधः, बालविवाहः, पुनर्विवाहनिषेधः, जन्मसिद्धैव जातिः, इत्यादयस्तेऽर्था अलौकिका इति तेषां परिवर्तनं न संभवति। किंच धर्मपरिवर्तनं धर्मत्वेनाधर्मत्वेन वा। आद्ये परिवर्तनमेव तन्न भवति। अन्त्ये कथं तल्लोकमान्यं स्यात्। अथायमर्थः—धर्मशब्देन तद्विशेषो लक्ष्यते, तस्य परिवर्तनमिति। तदपि पुनर्धर्मविशेषत्वेनाधर्मत्वेन वा। आद्ये चाण्डालादिगतास्पृश्यत्वादेः स्पृश्यत्वादिना परिवर्तने कथं स्पृश्यत्वस्य धर्मत्वमवगतम्। अलौकिकश्रेयःसाधनीभूतोऽर्थो हि धर्म इत्युच्यते। स्पृश्यत्वेन चालौकिकोऽर्थः कीदृशः साधितः स्यात्। अधर्मत्वेन चेल्लोकाग्राह्यत्वरूपो दोषस्तदवस्थ एव। अथायमभिप्रायः-धर्मविशेषत्वेन परिगृहीतस्यास्पृश्यत्वादेस्तद्विपर्ययेण स्पृश्यत्वादिनेदानीं परिवर्तनमित्येव। न तद्धर्मत्वेनाधर्मत्वेन वा। धर्मत्वाधर्मत्वयोरप्रत्यक्षयोः शब्दप्रमाणगम्यत्वादिति।

तत्र यद्यप्याधुनिकैरधर्मत्वं नोच्यते तथाऽपि पूर्वैः स्मृतिकारैरधर्मत्वेन परिगृहीतस्य चाण्डालादिस्पर्शस्याधर्मत्वमवर्जनीयमेव स्यात् । किंच धर्मपरिवर्तनमावश्यकमिति वदद्भिर्योऽनुष्ठेयविशेषोऽर्थः परिवर्तनीयत्वेनाभिमतः स तैर्धर्मत्वेन गृहीतो न वा। न चेद्धर्मपरिवर्तनमिति तेषामेवोक्तिर्व्याहता स्यात् । गृहीतश्चेद्धर्मत्वापरपर्यायेण श्रेयःसाधनत्वेन गृहीतो योऽर्थस्तद्विपर्ययावश्यकत्वं वदद्भिर्लोकानां श्रेयोमार्गे आहत्य विघ्नः संपादितः स्यात् ।

अथ परेषां धर्मत्वेनाभिमतो योऽर्थस्तत्परिवर्तनमावश्यकमित्याशयश्चेदीदृशेन परिवर्तनेन किं परेषां साधितं स्यात्। परिवर्तनीयोऽर्थो धर्मत्वेन येषामभिमतस्तत्पुरतो भवतामुपदेशो निष्फलः। यतस्ते न पूर्वसिद्धं धर्मं त्यक्तुमिच्छन्ति। यैश्च परिवर्तनीयःस्मृत्युक्तोऽर्थो धर्मत्वेन न परिगृहीतस्तैः सोऽर्थस्त्यक्तप्राय एवेति तत्राप्युपदेशो भवतां निष्फलः ।

अथ यद्यपि सोऽर्थस्तैस्त्यक्तप्राय एव तथाऽपि धर्मदृशस्तान्निर्भर्त्सयन्ति। तादृशनिर्भर्त्सनाद्या भीतिः सा परिवर्तनोपदेशादपसरतीति चेत्—किमनेन भीत्यपसारणेन । यथेच्छविहारः प्राकाश्येन कर्तुं शक्यत इति चेन्नैतद्धर्मपरिवर्तनम् । किंतु धर्मनाश एव । लेशतोऽपि नियन्त्रणाभावात् । ईदृश एवोद्देशो यद्यथेच्छविहारप्रवर्तनमिति चेद्भवतां यथा धर्मपरिवर्तनोपदेशरूपे यथेच्छविहार उपदेशं विनैव प्रवृत्तिस्तथेतरेषामपि भवदुपदेशं विनैव यथेच्छविहारे प्रवृत्तिः स्यात् । तस्माद्धर्मपरिवर्तनं कथमपि न संभवतीत्यलम् ।

यच्चोच्यते सांप्रतं कतिपये जनाः प्रौढविवाहचाण्डालस्पर्शपुनर्विवाहादौ प्रवृत्ता दृश्यन्ते। भूयसां च जनानां तादृशी प्रवृत्तिरावश्यिकी तदर्थं धर्मपरिवर्तनापेक्षेति। तन्न मनोरमम्। धर्मेण प्रवृत्तिर्नानुवर्त्या भवति । प्रवृत्त्यैव तु धर्मोऽनुवर्त्यो भवति । धर्मस्य प्रवृत्त्यनुसारित्वे धर्मत्वमेव न स्यात्। अथ मा भूद्धर्मत्वम्। उक्तविधा प्रवृत्तिस्त्वपेक्ष्यत एवेति चेद्धर्मावरणमपहाय काममुपदिशन्तु भवन्तो नास्माभिस्तत्र किंचिदुच्यते । प्रतिनिविष्टजनचित्ताराधनेन सिकतापीडनायमानेन न कोऽप्यस्माकं लेशतोऽपि लाभ इति दिक् ।

( रजोदर्शनोत्तरं विवाहे विचारः )

यत्तु रजोदर्शनानन्तरमेव मुख्यो विवाहकाल इति वदन्ति तदुपष्टम्भकतया च 'दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यात्' इति गृह्यसूत्रमुदाहरन्ति । तत्रेत्थं विचार्यते । किमयं विवाहकालो व्यवहारदर्शनान्निर्णीतः शास्त्रप्रमाणेन वा। नाऽऽद्यः । रजोदर्शनात्पूर्वं विवाहे लोकव्यवहारे क्वाप्यनुपपत्तेरभावात् ।

अथ संप्रति विवाहाः प्रायो रजोदर्शनानन्तरं बहवो जायमाना दृश्यन्ते । एतां सांप्रतिकीं परिस्थितिमवलम्ब्यायं विवाहकालो निर्णीयत इति चेन्नैतद्युक्तम् । सांप्रतिकीं सुरापाने भूयसीं प्रवृत्तिमालक्ष्य न सुरां पिबेदिति निषेधस्य नायं काल इति कल्पनीयं स्यात् । शास्त्रप्रमाणेनायं कालो निर्णीयत इति चेन्न । शास्त्रे तादृशवचनानुपलम्भात् । प्रत्युत रजोदर्शनोत्तरं विवाहे प्रायश्चित्तविधानं शास्त्रे दृश्यते । पूर्वोक्तगृह्यसूत्रबलात्तादृशकालो निर्णीयत इति चेद्गृह्यसूत्रोक्तिः कथं तत्साधिकेति वक्तव्यम् । नहि गृह्यसूत्रे रजोदर्शनानन्तरं विवाह इत्युक्तमस्ति । केवलं तत्र ब्रह्मचर्यविधिरुच्यते । स तु प्राग्रजोदर्शनाद्विवाहेऽपि नानुपपन्नः । न च तदानीं सिद्धमेव ब्रह्मचर्यमिति चेत्किं ततः । इष्टमेवैतत्संगृहीतं भवति । यदावश्यकं तत्सिद्धावस्थायां साध्यावस्थायां वा भवतु न काचित्क्षतिः । ब्रह्मचर्यं च न केवलं स्त्र्युपगमननिषेधमात्रस्वरूपम् । किं तु तत्र बहवो विधयो निषेधाश्च प्रतिपादिताः । ब्रह्मचर्ये च ये निषेधाः प्रतिपाद्यन्ते न वृक्षमारोहेत्, न बाहुभ्यां नदीं तरेत्, न स्त्रियमुपगच्छेदित्यादयस्ते सर्वे संरक्षणीया इत्येव । संरक्षणं च तेषां तद्विरुद्धाचरणाभावेन । स च विरुद्धाचरणाभावः स्वतः सिद्ध एवास्तु प्रतियोगिप्रसञ्जनपूर्वकं हठात्साधितो वाऽस्तु निषेधसंरक्षणमुभयत्राप्यविशिष्टमेव । यथाऽष्टमे वर्षे उपनीतो बटुर्ब्रह्मचर्यव्रते स्थितो भवति तथैवात्र बोध्यम् । तथा च सर्वे निषेधाः सर्वत्र प्रतियोगिप्रसक्तिपूर्वका एवेत्येवं नाभिनिवेशः कार्यः । अन्यथा न वृक्षमारोहेदिति निषेधः पङ्गुना न संरक्षितः स्यात् । निषेधपरिपालने तत्प्रतियोगिभूताचरणयोग्यताया अप्यावश्यकत्वं न मन्तव्यम् । पङ्गोर्वृक्षारोहणयोग्यताया अप्यभावात् । संभावनामात्रं तु सर्वत्राविशिष्टमेव । तथा च निषेधाविधयः प्रतियोगिसंभवाभिप्रायेण प्रतिपाद्यन्ते न तु सर्वत्र प्रतियोगिसत्तापेक्षा । मा दिवा स्वाप्सीरिति बटोरुक्तौ यस्य क्वचिद्दिवास्वापप्रसक्तिस्तत्रास्य निषेधस्यावकाश इति प्रसिद्धमेव ।

किंचायं ब्रह्मचर्यविधिः पुमांसमुद्दिश्योक्तो न तु स्त्रियम् । यतः सूत्रे ब्रह्मचारी स्यादित्युक्तं न तु ब्रह्मचारिणी स्यादिति । तत्र पुंसः स्त्रीसंबन्धयोग्यताऽपेक्ष्यते नतु स्त्रियाः पुंसंबन्धयोग्यता । स्त्रिया अल्पवयस्कत्वेऽपि पुंसः स्त्रीसमागमसंकल्पमात्रेणापि व्यभिचारसंभवात्तदर्थं ब्रह्मचर्यविधिस्तत्रापि चरितार्थो भवति । रजसा शुध्यते नारीत्यत्र पुरुषान्तरसमागमसंकल्पजपापात्प्रमुच्यत इति विज्ञानेश्वरेण मिताक्षरायामुक्तम् । किंच पत्न्या अल्पवयस्कत्वेऽपि परस्त्रीसंबन्धेन व्यभिचारसंभवोऽस्त्येवेति तदर्थं ब्रह्मचर्यविधेश्चारितार्थ्यमस्त्येव । यतोऽयं ब्रह्मचर्यविधिः स्वस्त्रियमिव परस्त्रियमपि कटाक्षी करोति । अन्यथाऽस्मिन्व्रते मध्ये परस्त्रीगमनेऽपि व्रतवैगुण्यं न स्यात् । नच सामान्यतः प्रतिपादितेन परस्त्रीगमननिषेधेन सिद्धिरिति वाच्यम् । तस्य पुरुषार्थत्वेन पुरुषार्थहानावप्युक्तव्रतवैगुण्यानाधायकत्वात् । अत एव नानृतं वदेदिति पुरुषार्थ-

तया सामान्यतः प्रतिपादितेऽपि निषेधे यज्ञियदीक्षायां क्रत्वर्थत्वेन पुनर्नानृतं वदेदिति निषेध उक्तः । तथा च यज्ञेऽनृतभाषणे निषेधद्वयाद्दुरदृष्टद्वयमुत्पद्यत एकं पुरुषार्थहानिकरमपरं यज्ञवैगुण्याधायकम् । यज्ञादन्यत्रानृतभाषणे त्वेकमेव दुरदृष्टं पुरुषार्थहानिकरं भवति । तथाऽत्र त्रिरात्रादिव्रते परस्त्रीगमने पुरुषार्थहानिकरं व्रतहानिकरं चेति दुरदृष्टद्वयम् । अन्यत्र परस्त्रीगमने पुरुषार्थहानिकरमेकमेव दुरदृष्टम् । व्रते स्वस्त्रीगमने चैकमेव व्रतहानिकरं दुरदृष्टमिति बोध्यम् ।

( रजोदर्शनात्प्रागेव विवाहे विचारः )

रजोदर्शनात्प्राग्विवाहश्च विज्ञानेश्वरस्य संमत एव । तेन चेत्थमाशङ्कितं मिताक्षरायाम्—विवाहोत्तरं संवत्सरं ब्रह्मचर्यमिति पक्षाङ्गीकारे मध्ये रजोदर्शनं चेदृतौ भार्यामुपेयादेवेति नियमानुसारेण गमने ब्रह्मचर्यहानिः । अगमन उपेयादेवेति नियमोल्लङ्घनमिति । रजोदर्शनात्प्राग्विवाहाभावे तु निरुक्ता शङ्कैव नावकाशं लभते । किंच रजोदर्शनात्प्राक्पत्नीगमने ब्रह्महत्यादोष उक्तः (ध. सिं. गर्भा. प्रक.) । रजोदर्शनात्प्राग्विवाह एव नास्ति चेत्तस्यानवकाशत्वं स्पष्टमेव ।

किंच रजोदर्शनोत्तरमेव विवाहे भ्रूणहत्यादोषानुत्पत्तय ऋतौ स्त्रीगमनस्याऽऽवश्यकतया त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादिति व्रतस्यानवकाशः । ऋतुकालस्य षोडशदिनावधित्वात्तदूर्ध्वमगमने भ्रूणहत्यादोषाभावात्तत्र त्रिरात्रव्रतस्य द्वादशरात्रव्रतस्य चावकाशत्वेऽपि सांवत्सरिकब्रह्मचर्यव्रतस्यानवकाश एव । निषिद्धदिनवर्जमृतौ स्वस्त्रीगमनेऽपि न ब्रह्मचर्यहानिरिति समाधानं विज्ञानेश्वरेणोक्तं गृह्यते चेद्विज्ञानेश्वरसंमतो विवाहकालः कुतो नानुमन्यते ।

किं च 'अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्' इत्यत्रोद्वाहविधावनन्यपूर्विकामित्युक्तम् । अन्यपूर्वकत्वं च यथा मनुष्यविशेषेण तथा देवताविशेषेण सोमादिनाऽपि भवति । अतो यावत्सोमादिनाऽनुपभुक्ता तावदेवोद्वाह्या भवति । तथा च स्मृतिवचनान्युदाह्रियन्ते—

> अनवाप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
> अव्यञ्जनकुचा श्यामा कुचहीना तु नग्निका ॥ १ ॥
> व्यञ्जनैस्त्वथ जातैस्तु सोमो भुङ्क्ते तु कन्यकाम् ।
> पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलाम् ।
> तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥ इत्यङ्गिरोवचनम् ।

तथा—

> भुञ्जीत व्यञ्जने सोमो गन्धर्वस्तु पयोधरे ।
> वलिवर्णागमे वायू रजस्यग्निः प्रतिष्ठितः ॥
> तस्माद्व्यञ्जनोपेतामरजस्कामपयोधराम् ।
> नोपभुक्तां तु सोमाद्यैर्दद्याद्दुहितरं पिता ॥ इति कश्यपवचनम् ।

तथा—

> रोमकाले तु संप्राप्ते सोमो भुङ्क्ते तु कन्यकाम् ।
> रजःकाले तु गन्धर्वो वह्निस्तु कुचदर्शने ॥
> तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥ इति संवर्तवचनम् ।

अयं च देवताकृत उपभोग आन्तरो नतु बाह्य इत्यन्यत् । एषु च वचनेषु रजोदर्शनात्प्रागेव विवाह इत्यत्र कारणं स्पष्टमेव प्रदर्शितम् । रजोदर्शनात्प्राग्विवाहे तु न तामुपभोक्तुमीहन्ते सोमादयः । अन्येन परिगृहीतत्वात् ।

( चतुर्थीकर्मविचारः )

यदि च कन्याया विवाहार्थं प्रयतमानेऽपि पितरि योग्यवरालाभेन रजोदर्शनात्प्राग्विवाहो न जातस्तदा कन्याया वृषलीत्वनिरासार्थं प्रायश्चित्तमुपदिश्यते । सोमाद्युपभोगप्रयुक्तदोषनिरासार्थं चतुर्थीकर्म च विधीयते । इदं चतुर्थीकर्म च त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादिति विहितव्रतानन्तरमेव कार्यम् । चतुर्थीकर्मेति शब्दस्तु योगरूढ्या प्रवर्तमानो द्वादशरात्रव्रतपक्षे संवत्सरव्रतपक्षे च व्रतान्ते क्रियमाणे तादृशकर्मण्यपि प्रयुज्यमानो न विरुध्यते । व्रतान्ते क्रियमाणेन चतुर्थीकर्मणा यः सोमाद्युपभोगप्रयुक्तदोषनिरासो जायते तत्र तादृशकर्मणः पूर्वं क्रियमाणं व्रतमप्युपयुज्यते । व्रते हीत्थमुक्तम्—

> दंपती रोहिणीसोमौ भुत्वः प्राथमिके दिने ।
> दाक्षायणीं यजेयातां द्वितीयदिवसेऽपि तौ ॥
> पूजयेतां महादेवीं गन्धर्वाप्सरसौ च तौ ।
> अग्निस्वाहे तृतीयेऽथ पूजयेतां च कालिकाम् ॥
> चतुर्थ्यां तौ यजेयातां शांकरीं मानवास्त्रियौ ।
> एवं प्रतिदिनं पूजां कुर्यातां दंपती तदा ॥
> चतुर्थ्येतेषु दिवसेष्वर्चयेद्ब्राह्मणान्बहून् ॥ इति ।

अत्र दाक्षायण्यादिपूजाविधिरुक्तः । तेन च सोमादीनां तत्पूज्यानां च प्रीत्युत्पादनम् । तेन च ता देवताः स्वसामर्थ्यविशेषेणान्योपभोगजन्यदोषं विनाशयन्तीति कल्प्यते । व्रतं चैतत्पितृगोत्रनिवृत्तिद्वारा वरैकगोत्रप्राप्तयेऽप्युपयुज्यत इत्यन्यत् । तथा च रजोदर्शनात्प्राग्विवाहे सोमाद्युपभोगाभावेन दोषानुद्भवान्न तन्निरासार्थं चतुर्थीकर्मापेक्षा भवति । चतुर्थीकर्म च प्रायश्चित्तस्वरूपमेवेति संस्काररत्नमालायामुक्तम् ।

ननु—षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।

सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः ॥

इति ज्योतिर्निबन्धोक्तवचने प्रथमे द्वितीये च वर्षे सोमकृत उपभोगः, तृतीये चतुर्थे च वर्षे गन्धर्वकृत उपभोगः पञ्चमे षष्ठे च वर्षेऽनलकृत उपभोग उक्तः । ततश्च रजोदर्शनात्प्राग्विवाहेऽपि सोमाद्युपभोगसद्भावात्तद्दोषनिरासार्थं चतुर्थीकर्माऽऽवश्यकमेवेति चेन्न । तदानीं कन्याया अत्यन्तबाल्यावस्थाया उपभोगानर्हत्वेनोपभोगस्य स्वीयसंकल्पमात्रपरत्वात् । स्वीयसंकल्पमात्रपरत्वादेव च तस्या अनन्यपूर्विकात्वं सिद्धम् । किंच सोमस्तृतीयवर्षारम्भे गन्धर्वाय तां कन्यां ददाति गन्धर्वश्च पञ्चमवर्षारम्भेऽग्नये ददाति । अग्निश्च सप्तमवर्षारम्भे योग्यवराय मनसा ददाति । संकल्पमात्रेणान्यपूर्वकत्वे च कथं दाता ज्ञानी संस्तां दातुमुत्सहेत, प्रतिग्रहीता वा तादृशः कथं प्रतिगृह्णीयात् । स्वीयत्वेन संकल्पश्च संकल्पकाल एव विवाहप्रतिबन्धको भवति न तु तादृशसंकल्पनाशोत्तरम् । अत एव च षडब्दमध्ये नोद्वाह्येत्युक्तम् । संकल्परूपस्याभावे चान्यपूर्वकत्वस्यावर्जनीयतया षडब्दोत्तरमपि नोद्वाह्या स्यादिति षडब्दमध्य इति विशिष्योक्तेरसंगतिः स्पष्टैव । संकल्पमात्रेणाप्यन्यपूर्वकत्वं भवतीति मताश्रयणेन चतुर्थीकर्मणः सर्वत्राऽऽवश्यकत्वं वदन्ति केचित् । अत एव भीष्माचार्यैर्जित्वाऽऽनीतामम्बानाम्नीं कन्यां संकल्पमात्रेण प्रतिग्रहानर्हां मन्यते स्म राजा । एतावता रजोदर्शनानन्तरं जायमानो विवाहः प्रायश्चित्तार्हत्वान्निन्द्यतर इति सर्वस्मृतिकारसंमतोऽर्थः । दशवर्षपर्यन्तं विवाहो मुख्यः स्तुत्यो भवति । तदूर्ध्वं रजोदर्शनात्प्राग्जायमानो विवाहो रजोदर्शनयोग्यतासत्त्वाद्गौणो निन्द्यो भवति । अनायत्या जायमाना गौणे प्रवृत्तिर्न निन्द्या भवति । सत्यां गतौ गौणपक्षावलम्बे निन्दा भवत्येव । रजोदर्शनानन्तरं तु जायमानो विवाहो निषिद्धत्वान्निन्द्यतमो भवति । सत्यां गतौ गौणपक्षाश्रयणे पुण्यस्य साकल्येनोत्पत्तिर्न भवतीत्येव न तु पापोत्पत्तिः । निषिद्धाचरणे तु पापोत्पत्तिरिति तयोर्भेदः ।

## ( विवाहात्पूर्वं रजोदर्शने तत्प्रायश्चित्तानुष्ठानकालविचारः )

विवाहात्पूर्वं कन्या रजस्वला चेत्तत्र तस्याः कन्यायास्तत्पितुर्वरस्य चेति त्रयाणां प्रायश्चित्तं विधीयते । तत्र साक्षाद्दोषः कन्यायाम् । पिता वरश्च तत्संबन्धेन दोषभाक् । संबन्धश्च कन्यायाः पित्रा सत्रा जन्यजनकभावः । वरेण समं तु दांपत्यभावः । शुद्ध्यर्थं क्रियमाणं चैतत्प्रायश्चित्तं कन्यादानात्प्रागाचरणीयं भवति । प्रायश्चित्तेन च दानक्रियायां कर्मीभूतायाः कन्यायाः कर्तुः पितुः संप्रदानस्य वरस्य च योग्यता संपाद्यते । योग्यतासंपत्त्यनन्तरमेव दानं प्रतिग्रहश्च युज्यते ।

ननु कन्यया क्रियमाणं प्रायश्चित्तं विवाहात्पूर्वं भवतु । दोषसत्त्वात् । पित्रा क्रियमाणमपि प्रायश्चित्तं विवाहात्पूर्वं भवतु। दुष्टकन्यासंबन्धेन तस्यापि दोषसत्त्वात् । जन्यजनकभावसंबन्धस्य च कन्याया जन्मत एव सिद्धत्वात् । वरेण क्रियमाणं तु प्रायश्चित्तं विवाहात्पूर्वं कर्तुं न शक्यते । दांपत्यभावसंबन्धस्य विवाहात्पूर्वमसिद्धत्वेन कन्यादोषेण वरे दोषोत्पत्तेर्वक्तुमशक्यत्वेन तत्रायोग्यतैव नास्ति दूरे योग्यतासंपत्त्यर्थं प्रायश्चित्ताचरणमिति चेत्—किं वरेण क्रियमाणं प्रायश्चित्तं त्वदुक्तरीत्या विवाहात्पूर्वं न संभवतीत्येतावता तेन विवाहोत्तरं कर्तव्यमित्युच्यते चेत्तदपि न संभवति । प्रायश्चित्तेनापगतदोषायाः कन्यायाः पाणिग्रहणेन दांपत्यसंबन्धोत्पत्तावपि वरे दोषोत्पत्तेरसंभवात् । तर्हि माऽस्त्वेव सर्वथा वरस्य प्रायश्चित्तमिति चेदुच्यते । रजोदर्शनेनोत्पन्नदोषैव कन्या वरेण भार्यात्वेन संकल्पितेति विवाहात्प्रागपि संकल्पमात्रेण वरे दोषोत्पत्तेरवर्जनीयत्वात् । तादृशदोषनिरसनपूर्वकप्रतिग्रहयोग्यतासिद्ध्यर्थं विवाहात्पूर्वमेव वरकृतप्रायश्चित्तं युज्यते ।

नन्वेवं तामुद्वहन्निति सौत्रो वर्तमानप्रत्ययनिर्देशो न संगच्छते । विवाहात्पूर्वमेव प्रायश्चित्ताचरणे प्रायश्चित्तकाले विवाहस्य भविष्यत्त्वेन भविष्यत्कालबोधकप्रत्ययनिर्देशस्य युक्तत्वादिति चेन्न । भार्यात्वेन मानसः संकल्पश्च मनोवृत्तिविशेषः कृतिरूपः । वहधात्वर्थश्च भार्यात्वोत्पत्त्यनुकूलव्यापारः । तत्र बाह्यव्यापारस्येव कृतेरपि भार्यात्वोत्पत्त्यनुकूलव्यापारत्वेन तस्या अपि वहधात्वर्थान्तर्भावेण वर्तमानप्रत्ययस्याबाधनात् । कृतेर्धात्वर्थानन्तर्भावनये तु वर्तमानसामीप्ये शता बोध्य इति शिवम् ।

नन्वेवं विवाहात्प्राग्रजोदर्शने तया सह कृतेन विवाहसंकल्पेन दोषोत्पत्तिश्चेद्यत्र तया सह विवाहः कारणान्तरेण नाभूत्किंत्वन्ययैव कयाचिददृष्टरजसा नग्निकया । तत्रापि तत्प्रायश्चित्तं कर्तव्यं स्यादिति चेद्भ्रान्तोऽसि । रजोदर्शनोत्तरं विवाहः शास्त्रनिषिद्ध इति तया सह विवाहसंकल्पः शास्त्रविरुद्ध इति तादृशसंकल्पजो दोषः कृतेऽपि प्रायश्चित्ते सर्वथा न विनष्टो भवति । ज्ञानपूर्वकत्वात् । किंतु तत्र प्रायश्चित्तेन स दोषो मार्जितो भवति । तथापि कृतेऽपि प्रायश्चित्ते लेशतस्तज्जन्यदुःखभोगस्तस्यावर्जनीय एव । प्राय-

श्चित्तेन तु केवलं कर्मण्यधिकारसिद्धिः । प्रायश्चित्तात्पूर्वं कर्मण्यनधिकारश्च न संध्याग्निहोत्रादौ कर्ममात्रे । किं तु विवाह एव । विवाहेऽप्यनधिकारः शास्त्रविरुद्धत्वाद्दृष्टरजसा कन्यया सह जायमान एव न सर्वत्र । तथाच यदा संकल्पितामपि दृष्टरजसं कन्यां परित्यज्यान्यामदृष्टरजसं वोढुं प्रवृत्तस्तदा तत्र कर्मणि तस्याधिकारोऽस्त्येवेति किमर्थं प्रायश्चित्तमिति बोध्यम् ।

## (रजोदर्शनानन्तरं विवाहे प्रायश्चित्तविचारः)

अथ रजोदर्शनोत्तरं विवाहे प्रायश्चित्तमुच्यते—

प्रायः पापमिति प्रोक्तं चित्तं तस्य विशोधनम् ।

विवाहात्पूर्वं रजोदर्शने सोमादयोऽन्येनापरिगृहीतामालोच्योपभुञ्जते । तेन च पातकेन तस्याः सद्यो वृषलीत्वम् । तादृशवृषलीत्वबीजभूतस्य पातकस्य प्रायश्चित्तेन विशोधनं भवति । ननु वृषलीत्वं जातिविशेषः । स च जन्मत एव प्राप्यते नान्यः कश्चन तत्र हेतुः । तत्कथमुच्यते तस्याः सद्यो वृषलीत्वमिति । उच्यते । वृषलीत्वं न प्राप्यत इति सत्यमेव । किंतु परत्र परशब्दः प्रयुज्यमानो विनाऽपि वतिं वत्यर्थं गमयतीतिन्यायेन सा कन्या वृषलीवद्भवतीति तत्तात्पर्यम् । तत्र सादृश्यमूलभूतः साधारणधर्मश्च वक्तृतात्पर्यानुरोधेन व्याख्येयो भवति । नहि पथि शूद्रवदाचरेदित्युक्ते शूद्रस्त्रिया पक्वमन्नं तयाऽऽनीतमुदकं वा गृह्यते । न वा शूद्रवत्पुनर्विवाह स्तत्रानेन वचनेन समनुज्ञायते ।

तथा—पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।<br>क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥

इत्यत्र निन्द्यत्वमात्रे तात्पर्यम् । निन्दार्थवादोऽयम् । प्रकृते च विवाहात्पूर्वं रजस्वलाया धर्मकार्यानर्हत्वेन वृषलीसादृश्यमवधेयम् ।

## (प्रायश्चित्तेन वृषलीत्वनिरासविचारः)

नन्वेतादृशं वृषलीसादृश्यं प्रायश्चित्तेनापगच्छति न वा । उच्यते । प्रायश्चित्तस्य द्वयी शक्तिः । पापविनाशशक्तिः पापावरणशक्तिश्च । तत्राज्ञानतः पापाचरण आद्योपयुज्यते । ज्ञानतः पापकर्माचरणे त्वन्त्या । तदुक्तम्—

प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।<br>कामतो व्यवहार्यस्तु वचनादिह जायते ॥ (याज्ञ० ३।२२६) इति ।

तथा चाज्ञानतः कृतं कर्म प्रायश्चित्तेन विनश्यति । ज्ञानपूर्वकं तु कर्म प्रायश्चित्तेन न विनश्यति । किंतु केवलमावृतं भवति ।

( प्रायश्चित्तेन कर्मविनाशे विचारः )

ननु कर्म सदसद्वाऽऽशुविनाशित्वात्स्वयमेव नश्यति । तथा च कथं तस्य प्रायश्चित्तेन विनाश उच्यते । सत्यम् । कर्म हि फलजनकमपूर्वमुत्पाद्य विनश्यति । तथा चाविद्यमानमपि कर्मास्तिकल्पमेव भवति । कार्यद्वारा तस्य सत्त्वात् । प्रायश्चित्तेन तु तस्यापूर्वस्य विनाशः । एतावतैव च प्रायश्चित्तं कर्मविनाशकमित्युच्यते । दुरितविनाशाच्च न तत्फलीभूतदुःखोपभोगः ।

नन्वेवं ' नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ' इति वचनविरोधः । न । तस्य वचनस्य ज्ञानपूर्वककृतकर्मविषयत्वात् । तत्त्वभुक्तं सत्प्रायश्चित्तेनापि न क्षीयते ।

( ज्ञानपूर्वकाज्ञानपूर्वककर्मणोर्विशेषः )

ननु ज्ञानपूर्वकाज्ञानपूर्वककर्मणोस्तादृशः को विशेषो येनैकं प्रायश्चित्तेन विनश्यत्यपरं नेति । उच्यते । अज्ञानपूर्वकं यत्कर्म तद्भवति नतु क्रियते । तथाचोक्तं वासिष्ठे—

' मनःकृतं कृतं राम न शरीरकृतं कृतम् ' इति ।

अतस्तदकृतप्रायमेवेति तस्मादुत्पन्नं दुरितं न ज्ञानरूप आत्मनि तदुपाभिभूते चित्ते वा तादृशं दृढतरं संलग्नं भवति यादृशं ज्ञानपूर्वककृतकर्मोत्थम् । तथाच ज्ञानपूर्वककर्मजन्यं दुरितं दृढसंलग्नं प्रायश्चित्तेन न विनश्यति किंतु प्रायश्चित्तेन केवलमावृतं भवति । तत्र तादृशदुरितजन्यदुःखोपभोगो यथाकालं भवत्येव । दुरितस्य हि शक्तिः कर्माधिकारप्रतिबन्धिका । यावच्च न प्रायश्चित्तं तावच्छक्तिरप्यवस्थितैव भवति सति तु प्रायश्चित्ते शक्तेर्विनाशः । दुरितस्य फलोत्पादनशक्तिस्तु स्वाभाविकी यावदाश्रयं तिष्ठत्येवेति तज्जन्यदुःखं

( प्रायश्चित्ते कृते कर्माधिकारविचारः )

यथाकालमवर्जनीयमेव । कर्म च द्विविधम् । स्वमात्रावलम्बि परावलम्बि च । संध्याग्निहोत्रदानयजनाध्ययनादिकमाद्यम् । प्रतिग्रहयाजनाध्यापनादिकं द्वितीयम् । यद्यपि दानेऽपि प्रतिग्रहीतृसापेक्षत्वान्न स्वमात्रावलम्बित्वं तथाऽपि न प्रतिग्रहीतुर्दानक्रियाकर्तृत्वमित्यभिप्रायेण तस्य स्वमात्रावलम्बित्वं बोध्यम् । एवमेव यजनाध्ययनादिषु बोध्यम् । तत्राऽऽद्यं कर्म द्वितीयस्योपजीव्यभूतम् । यस्य चाऽऽद्ये कर्मण्यनधिकारस्तत्र सुतरां द्वितीयेऽनधिकारः । यत्र चाऽऽद्यं कर्म कर्तुं शक्यते तत्र द्वितीयं भवतु मा वा भूत् । नहि कारणसत्त्वे कार्यं भवत्येवेति नियमः । किंचित्कारणास्तित्वेऽपि कारणान्तराभावेन प्रतिबन्धकेन वा कार्याभावस्य परिदृश्यमानत्वात् । तथाच स्वमात्रावलम्बिकर्मकर्त्राऽपि क्वचित्परावलम्बि कर्म कर्तुं न शक्यते । यथा कर्माङ्गाशौचे

' द्विजस्याब्धौ तु नौयातुः शोधितस्याप्यसंग्रहः '

इत्यत्र च । असंग्रहश्च तस्यैतैरेस्तत्साहित्येन श्रौतस्मार्तकर्मानुष्ठानम् । तत्साहित्येन कर्मानुष्ठाने संसर्गदोषः स्यादेव । तथा च कर्माधिकारः संसर्गदोषाभावः पापफलोपभोगाभावश्चेति त्रयं प्रायश्चित्तसाध्यम् । तत्राज्ञानतः पापे जाते द्वयं साध्यते । ज्ञानतः कृते पापे तु क्वचिदाद्यं द्वयं क्वचिदाद्यमेवेति । प्रकृते च तारुण्योद्भवे सोमाद्युपभोगजन्यो दोषो न कन्यया ज्ञानतः क्रियते । किंत्वज्ञानत एव जायते । न सोमादयस्तत्कृत उपभोगो वा प्रत्यक्षीक्रियते कन्यया । अज्ञानतो जायमानपातकस्थले प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेदिति याज्ञवल्क्यस्मृत्यनुसारेण प्रायश्चित्तेन पातकमेव विनष्टं भवतीति न दुःखोपभोगो न कर्मानधिकारो नापि तत्संसर्गदोषः । रजोदर्शनानन्तरं विवाहे प्रायश्चित्ते कृतेऽपि न धर्मकर्मार्हत्वमिति स्मृतौ क्वचित्स्पष्टमुक्तं स्याच्चेत्तदपि निन्दार्थवाद एवेति कथमपि रजोदर्शनात्प्राग्विवाहः कार्य इत्यर्थे पर्यवस्यति । अन्यथा प्रायश्चित्तैरपैत्येन इत्यस्यासंगत्यापत्तेः । किंच तथा सति धर्मकार्यानर्हस्य दानानर्हत्वाद्विवाह एव न स्यात् । धर्मकार्यानर्हत्वे प्रायश्चित्तविधिरपि न स्यादिति तु भ्रममात्रम् । प्रायश्चित्तविधिबलादेव तादृशस्थले तदधिकारस्य सत्त्वात् । किंच प्रायश्चित्तोत्तरमपि धर्मकार्यानर्हत्वाङ्गीकारे प्रायश्चित्तेन किं कृतं स्यात् । प्रायश्चित्तेन हि दुरितनाशो दुरितावरणं वा जायते । अत्र तु दुरितनाशे दुरितावरणे वा धर्मकार्यार्हत्वमवर्जनीयमेव ।

( ज्ञानकृताज्ञानकृतत्वविचारः )

अत्रेदं बोध्यम् । प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेदित्यत्राज्ञानकृतमित्यस्य कोऽर्थः । न ज्ञानमज्ञानम् । अज्ञानेन कृतमज्ञानकृतमिति । अथवा ज्ञानेन कृतं ज्ञानकृतम् । न ज्ञानकृतमज्ञानकृतमिति । अत्राऽऽद्योऽर्थो न संभवति। अज्ञानस्य करणत्वानुपपत्तेः । पातकमज्ञानावस्थायां कृतमित्येव । न तु तत्राज्ञानस्य कथमपि करणत्वम् ।

नन्वज्ञानं ज्ञानाभावः । अज्ञानकृतमिति यत्पातकमुच्यते तत्पातकं यदि ज्ञानं स्यात्तर्हि नैव स्यादित्येवं तस्य पातकस्य ज्ञानं प्रतिबन्धकम्। प्रतिबन्धकाभावस्य च साधारणकारणत्वमस्त्येवेति चेत्—एवमप्यज्ञानस्य कारणत्वं संभवति नतु कथमपि करणत्वम्। अज्ञानेन कृतमित्येवं तृतीयासमासस्तु 'कर्तृकरणे कृता बहुलम्' (पा० सू०२।१।३२) इत्यनुशासनेन करणतृतीयान्तस्यानुशिष्यते । करणं च व्यापारवदिति नियमः । अज्ञानस्य चाभावरूपस्य न कोऽपि तत्र व्यापारो दृश्यते । अथ द्वितीयेऽपि ज्ञानस्य कथं करणत्वमिति चेदुच्यते । ज्ञानेच्छाप्रवृत्तीनामुत्तरोत्तरस्य पूर्वसाध्यत्वमिति नियमः । ज्ञानतो यत्क्रियते तत्र ज्ञानादिच्छा जायते । इच्छा कामः । अयमेव च ज्ञानस्य व्यापार इति ज्ञानस्य करणत्वं सुलभम् । न च कामकृतमिति यदुच्यते तत्र कामस्य को व्यापार इति वाच्यम् । तत्र प्रवृत्तिरूपव्यापारस्य सत्त्वात् । युक्तश्चायं द्वितीय

एवार्थः। प्रथमेऽर्थे हि अनिच्छताऽपि दासेन स्वामिपारतन्त्र्यात्कृतस्य प्राणिवधपातकस्य दलद्वयेनाप्यसंग्रहान्न्यूनता स्यात्। दासकृतस्य प्राणिवधस्य ज्ञानावस्थायां जायमानत्वे-नाज्ञानकृतत्वाभावात् 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्' इति पूर्वार्धेनासंग्रहः। दासस्येच्छाया अभावेन कामकृतत्वाभावात् 'कामतो व्यवहार्यस्तु' इत्युत्तरार्धेनाप्यसंग्रह एव। तथा च तादृशस्थले प्रायश्चित्तेन पातकं विनश्यत्युताऽऽवृतं भवतीत्यस्यार्थस्याकथनात्स्मृतिकारस्य महर्षेर्याज्ञवल्क्यस्य न्यूनतापत्तिर्दुष्परिहरा भवति। द्वितीयार्थे तु न न्यूनता। दासकृतप्राणिवधस्य ज्ञानावस्थायां जायमानत्वेऽपि दासेच्छाया अभावेन ज्ञानस्य करणत्वाभावेन ज्ञानकृतत्वाभावात्पूर्वार्धेन तत्संग्रहधौव्यात्। ईदृशस्थले च कृतमप्यकृतप्रायमेव भवति। तदुक्तम्—

'सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत्' इति।
'गौणमापदि यत्कर्म निषिद्धं वाऽपि यत्कृतम्।
प्रसह्य कारितं यच्च कृतमप्यकृतं भवेत्'॥ इति च।

अकृतमित्यस्याकृतवदित्यर्थः। तथा च तादृशस्थले प्रायश्चित्तेन पातकस्य विनाशः सिध्यति। पूर्वार्धेऽज्ञानकृतमित्युक्त्वोत्तरार्धे तत्प्रतिद्वंद्वितया कामत इति वदन्स्मृति-कारोऽप्यमुमेवार्थमभिप्रैति। अन्यथा 'यदज्ञानकृतं भवेत्, ज्ञानतो व्यवहार्यस्तु' इति 'यदकामकृतं भवेत्, कामतो व्यवहार्यस्तु' इति वोभयत्र ज्ञानशब्दं कामशब्दं वा निर्दिशेत्। एतदुक्तं भवति। अज्ञानकृतत्वं ज्ञानकरणककृत्यभावविशिष्टत्वम्। यत्र कर्मकालेऽहमिदं कर्म करोमीत्येवं ज्ञानमेव नास्ति तत्र ज्ञानकरणककृत्यभावः सुतराम्। परतन्त्रदासादिकृतोक्तापराधस्थले तु कर्मकाले तादृशज्ञानसत्त्वेऽपि तस्य तादृशकर्मविषयकेच्छाया अभावाज्ज्ञानस्येच्छाद्वारा करणत्वाभावेन ज्ञानकरणककृत्य-भावो वर्तत एव। किंचेच्छाविशेषो हि कृतिकरणीभूतस्य ज्ञानस्यावान्तरव्यापारः। स चेच्छाविशेषो ज्ञानजन्यः कृतिजनकश्च। तस्येच्छाविशेषस्य येन रूपेण ज्ञानजन्यता तेनैव रूपेण तस्य कृतिजनकताऽपेक्ष्यते। तादृशरूपभेदे तु ज्ञानकरणककृत्यभाव एव भवति। यथा गौणमुख्यपक्षयोर्मुख्यपक्षाश्रयणेन कर्मचिकीर्षा। कृतिस्त्वापद्यनायत्या गौणपक्षमवलम्ब्याभूत्। यथावा विधिनिषेधसंरक्षणेन कर्मचिकीर्षा। कृतिस्त्वापद्यना-यत्या विधिनिषेधोल्लङ्घनेनाभूत्। तत्रोभयत्रापि ज्ञानकरणककृत्यभावस्य सत्त्वादज्ञान-कृतत्वम्। आद्ये गौणपक्षाश्रयणेऽप्यज्ञानकृतत्वान्न तादृशी तस्य कर्मकर्तुर्लोके निन्दा भवति। अन्त्ये च विधिनिषेधोल्लङ्घनेऽप्यज्ञानकृतत्वात्प्रायश्चित्तेन पातकस्य विनाश एव नत्वावरणमात्रम्। यदि तु हठाद्गौणपक्षाश्रयणं विधिनिषेधोल्लङ्घनं वा तत्रेच्छा-विशेषानुरूपैव कृतिरिति ज्ञानजन्यतावच्छेदकस्य कृतिजनकतावच्छेदकस्य चेच्छाविशेष-रूपस्यैक्यान्न ज्ञानकरणककृत्यभाव इत्यज्ञानकृतत्वाभावः। अत आद्योदाहरणे लोके

भूयसी निन्दा द्वितीयोदाहरणे च प्रसह्य विधिनिषेधोल्लङ्घनात्प्रायश्चित्तेऽपि न पापविनाशः किंतु पापावरणमात्रम् । विध्युल्लङ्घने विहितस्याननुष्ठानाद्दोषः । निषेधोल्लङ्घने च निन्दितस्य सेवनाद्दोषः । तदुक्तम्—

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ इति ।

विहितस्याऽऽवश्यकत्वेन विहितस्य यज्ञोपवीतधारणसंध्योपासनादेरनाचरणान्निन्दितस्य हिंसादेः सेवनाच्च नरः पातकी भवति । उभयत्र हेतुरिन्द्रियनिग्रहाभावः । तत्र पातकस्य महत्त्व एव पातित्यं नान्यथा ।

( विहिताननुष्ठानात्पापोत्पत्तिविचारः )

ननु विहितस्यानाचरणं विहिताचरणाभावः । तस्य चाभावरूपत्वात्कथं तस्माद्भावरूपस्य पातकस्योत्पत्तिरिति चेन्न । अत्र विहिताननुष्ठानमित्यनेन तात्कालिको भावरूपः संकल्पोऽभिधीयते । स च प्रत्यासत्त्या विहिताननुष्ठानविषयको विहितमपि कर्म न कर्तव्यमित्याकारकः । तथा च विहितानाचरणमज्ञानतश्चेन्न तत्पतनहेतुः । निषिद्धसेवनं त्वज्ञानतो जायमानमपि भावरूपत्वात्पातकहेतुर्भवत्येव । एवं स्थिते रजोदर्शनात्प्राग्विहितं कन्याविवाहं पिता यदि न करोति तद्विरुद्धं चेदानीं नैव विवाहं करोमीति संकल्पयति च तदा तस्य महान्दोषः । प्रायश्चित्ते कृतेऽपि स दोषो न विनश्यति केवलमाव्रियते । तथाच कामतः क्रियमाणेन विहितविरुद्धसंकल्पेन निषेधोल्लङ्घनेन वा जायमानं पातकं प्रायश्चित्तेनापि न विनश्यति केवलमाव्रियते । किंतु कालभूयस्त्वे प्रायश्चित्तेनापि न तादृशमावरणं भवति पातकस्य यथा लोके व्यवहार्यता स्यात् । कालभूयस्त्वं च वर्षत्रयोपलक्षणमित्युत्सर्गः । तथाच हठाद्विवाहाकरणकालभूयस्त्वयोर्द्वयोरभावे रजोदर्शनोत्तरं विवाहितायाः प्रायश्चित्तेन व्यवहार्यता भवति । एतच्चाऽऽपद्यसत्यां गतावेव बोध्यम् । अतः कन्याविवाहे पित्रा तदभावे भ्रात्रादिना वा तथा प्रयतितव्यं यथा रजोदर्शनात्प्रागेव विवाहो जायेतेति सिद्धम् ।

किं च पतितोत्पन्ना कन्या दुष्टबीजजाऽपि प्रायश्चित्तेन शुद्धा विवाह्या धर्मकार्यार्हा च भवति किमुत शुद्धबीजजा । पतितोत्पन्ना च न ममैत इत्येवं वाचा मुक्तजनकादिसंबन्धा कृतप्रायश्चित्ता च विवाह्या भवतीति प्रायश्चित्तेन्दुशेखरे (पृ०) निर्णीतम् । पितृकृतपातकस्य कार्यकारणभावसंबन्धद्वारा कन्यायामंशतः संबद्धस्य प्रायश्चित्तेन विनाशो युक्त एव । न तत्र कन्यायाः कश्चन लौकिकोऽपराधो दृश्यते । तथा चाज्ञानतो जायमानस्य पातकस्य यथा प्रायश्चित्तेन विनाशस्तथाऽत्र प्रायश्चित्तेन पातकविनाशः स्यादेव ।

( पतितसंततेः प्रायश्चित्तेन शुद्धिविचारः )

नन्वेवं पतितोत्पन्नस्य पुत्रस्यापि प्रायश्चित्तेन पितृकृतपापसंबन्धविनाशः स्यादीति चेत्—अस्तु। नन्वकृतप्रायश्चित्ते पुत्रे पौत्रस्य तथाऽकृतप्रायश्चित्ते पौत्रे प्रपौत्रस्य प्रायश्चित्तेन पापनाशे शुचित्वं स्यादिति कियत्पर्यन्तामियं शुद्धिर्भवतीति चेदुच्यते। कर्मणा जात्यन्तरप्राप्तिप्रकारो याज्ञवल्क्येनाभिहितो व्यत्यये कर्मणां साम्यम् ( याज्ञ० १। ९६ ) इत्यत्र। अयमर्थः—वृत्त्यर्थानां कर्मणां विपर्यासे पञ्चमादौ जन्मनि तत्साम्यं भवति। यथा देवदत्तो ब्राह्मण आपद्गतः क्षात्रेण कर्मणा जीवन्यज्ञदत्तं पुत्रं जनयति। यज्ञदत्तोऽपि तथैव तेन कर्मणा जीवंश्चैत्रं पुत्रं जनयति। चैत्रोऽपि तथैव तेन कर्मणा जीवन्मैत्रं पुत्रं जनयति। मैत्रश्चायं देवदत्ताच्चतुर्थः पुरुषः। स मैत्रस्तथैव तेन कर्मणा जीवन्यं पुत्रं जनयेत्स पुत्रो मूलपुरुषात्पञ्चमो जात्या क्षत्रियो भवति। अयं भावः—जात्या ब्राह्मणो देवदत्तः कर्मणा क्षत्रियतुल्योऽभवत्। तस्माद्देवदत्तादुत्पन्नो द्वितीयो यज्ञदत्तोऽपि तथैव जात्या ब्राह्मणः कर्मणा क्षत्रियतुल्यः। किंतु तत्र देवदत्ताद्यद्ब्राह्मण्यमनुवर्तते तत्पादोनम्। देवदत्तस्य क्षत्रियतुल्यत्वात्। यदि यज्ञदत्तः क्षत्रियकर्म जह्यात्तर्हि तत्र ब्राह्मण्यं केनाप्यप्रातिहतं पूर्णं स्यादेवेत्यन्यत्। तस्माद्यज्ञदत्तादुत्पन्नस्तृतीयश्चैत्रोऽपि जात्या ब्राह्मणः कर्मणा क्षत्रियतुल्यः। किंतु तत्र यज्ञदत्ताद्यद्ब्राह्मण्यमनुवर्तते तदर्धम्। देवदत्तापेक्षयाऽपि यज्ञदत्ते क्षत्रियसाम्यस्याऽऽधिक्यात्। चैत्रादुत्पन्नश्चतुर्थो मैत्रोऽपि जात्या ब्राह्मणः कर्मणा क्षत्रियतुल्यः किंतु तत्र चैत्रात्पादमात्रं ब्राह्मण्यमनुवर्तते। यज्ञदत्तापेक्षयाऽपि चैत्रे क्षत्रियसाम्यस्याऽऽधिक्यात्। मूलपुरुषे प्रथमे देवदत्ते हि पादशः क्षत्रियसाम्यम्। द्वितीये यज्ञदत्ते क्षत्रियसाम्यं तु स्वकर्मणा पादश आनुवंशिकं च पादश इत्येवमर्धम्। अत्राऽऽनुवंशिकं स्वकर्मणा प्राप्तस्य क्षत्रियत्वस्योद्दीपकमिति तेनोद्दीपनेन स्वकर्मणा पादशः प्राप्तं यत्क्षत्रियत्वं तदेव तेनोद्दीपनेन द्विगुणं सदर्धं भवति। न तु स्वकर्मणा प्राप्तं पादश आनुवंशिकं पादश इत्येवं मिलित्वाऽर्धं भवति। अथवा मिलित्वाऽप्यर्धमस्तु न काचित्क्षतिः। तृतीये चैत्रे क्षत्रियसाम्यं तु स्वकर्मणा पादश आनुवंशिकं त्वर्धमित्येवं पादोनं साम्यम्। चतुर्थे मैत्रे क्षत्रियसाम्यं तु स्वकर्मणा पादश आनुवंशिकं तु पादोनमित्येवं पूर्णं क्षत्रियसाम्यम्। अतस्तत्र पादशोऽनुवृत्तमपि ब्राह्मण्यमकिंचित्करमिति तस्माज्जातः पञ्चमः पुरुषो जात्यैव क्षत्रियो मन्तव्य इति।

अत्रेदं बोध्यम्। यज्ञदत्ते चैत्रे मैत्रे च यद्यप्युत्तरोत्तरमूनं ब्राह्मण्यं तथाऽपि ते वसन्ते ब्राह्मणोऽग्नीनादधीतेत्येवं ब्राह्मणमुद्दिश्य विहितकर्मणि ब्राह्मणकन्यया सह विवाहे चाधिकारिणो भवन्त्येव। जन्मना प्राप्तस्य ब्राह्मणत्वस्य तत्र सत्त्वात्।

तत्र हि तदेव प्रयोजकम् । पञ्चमस्तु जन्मनैव क्षत्रिय इति तस्योक्ते कर्मणि नाधिकारः । अतस्तेन सवर्णविवाहे कर्तव्ये क्षत्रियकन्यैवोद्वाह्या भवति । प्रत्युत ब्राह्मणकन्यया विवाहे प्रतिलोमसंकरः स्यात् । अत्र यदि चतुर्थः क्षात्रं कर्म न कुर्यात्तर्हि तत्र पादशो विद्यमानाऽपि ब्राह्मणत्वजातिरुज्ज्वला भवेदिति तत्पुत्रो जन्मतो ब्राह्मण एव भवेत् । कर्मणा संबद्धा जातिरौपाधिकीति उपाधिनिवृत्तौ तस्या अपि निवृत्तिरेव । प्रकृते तु पतितोत्पन्नस्थले पतितात्पञ्चमे पुरुषे ब्राह्मणत्वस्य पादशोऽप्यनुवृत्त्यभावात्तत्र प्रायश्चित्तमकिंचित्करम् । प्रायश्चित्तेनापि न तस्य ब्राह्मणत्वम् । प्रायश्चित्तेन हि निघर्षणेन मलस्येव विद्यमानस्याशुभस्य विनाशो भवति । यदशुभविनाशकमेव तत्प्रायश्चित्तमिति हि प्रायश्चित्तस्वरूपं प्रायश्चित्तेन्दुशेखरे प्रदर्शितम् । तथाच प्रायश्चित्तेन सतः कस्यचिद्विनाशः स्यान्नतु अविद्यमानस्य कस्यचित्कथमप्युत्पत्तिः । पतिताच्चतुर्थपुरुषपर्यन्तमेव ब्राह्मणत्वस्यानुवर्तनात्तत्राप्रकाशिततया विद्यमानस्य ब्राह्मणत्वस्य प्रायश्चित्तेनौज्ज्वल्यसंभवः । तत्रापि यदि मातृतो ब्राह्मणत्वस्याविघातः स्यात्तर्ह्येव प्रायश्चित्तेन ब्राह्मणत्वस्याऽऽविर्भावो नान्यथा । स चाविघात इत्थम् । पतितस्य पत्नी ब्राह्मणकन्यैवापेक्षिता । एवं तत्पुत्रस्य पौत्रस्य च पत्नी ब्राह्मणकन्यैवापेक्षिता । पतितस्य पातित्यानन्तरं विवाहश्चेत्तत्र विवाहे तथा तत्पुत्रस्य पौत्रस्य च विवाहे लोभादिना कन्यापिता कश्चित्कन्यां दातुं प्रवृत्तो भवेत् । विवाहश्च स आसुरो राक्षसो

(पतिततत्संतत्योः प्रायश्चित्तोपदेशे विशेषः)

वा भवेद्भवदस्तु नाम । किंच प्रायश्चित्तं चिकीर्षता पतितेन तत्पुत्रादिना वा प्रायश्चित्तनिबर्हणीयपातकनिमित्तज्ञानोत्तरं प्रायश्चित्तपर्यन्तं स्वकीयब्राह्मणत्वस्मारकमाशौच इव संध्योपासनमास्थेयम् । तथा न हिंस्यात्सर्वा भूतानीत्यादयः सामान्यरूपेणोक्ता निषेधा ब्राह्मणो न सुरां पिबेदित्यादयो विशेषरूपेणोक्ता निषेधाश्च सर्वे संरक्षणीया एव । तथाच पतितवंश्यः प्रायश्चित्तं चिकीर्षन्पुरुषो मूलपुरुषात्पतितात्कतिथः, तस्य मातृतः शुद्धिर्ब्राह्मण्यस्मरणं निषेधसंरक्षणं चेति सर्वमवलोक्यैव प्रायश्चित्तं प्रकथनीयम् । इतरथा वदन्पतितात्यागित्वात्स्वयं प्रायश्चित्ती भवेत् । किंच पतितस्य पातित्यापादककर्मोत्तरं प्रायश्चित्तयोग्यः काल आहत्य विंशतिवर्षात्मकः स्यान्नतु ततोऽधिकः क्वचिदपि । तदुत्तरं तु तस्य ब्राह्मण्यं नष्टप्रायमेव भवति । तथाच तादृशे नष्टप्राये ब्राह्मण्ये संततिश्चेत्पुत्रे कियतांऽशेन ब्राह्मण्यानुवृत्तिः स्यात्पौत्रे तु स्याद्वा न वेति विचार्यानुवृत्तिर्नचेत्स पौत्रोऽपि प्रायश्चित्तेन शुद्धिं नार्हतीति विभावनीयं सूरिभिः ।

सर्वथा प्रायश्चित्तेन जात्युत्कर्षो न जात्युत्पत्तिः । एतेन म्लेच्छानां प्रायश्चित्तेनाऽऽर्यत्वं प्राप्यत इत्यपास्तम् । प्रायश्चित्तं हि न क्वापि न कस्याप्यंशतोऽप्युत्पादकं भवतीति शास्त्रसिद्धान्तात् । तथाचानार्येणाऽऽर्यत्वं न प्राप्यत एव । आर्य-

ष्वप्येकजातीयेनान्यजातीयत्वं प्रायश्चित्तेन नैव प्राप्यते । समुद्रयानप्रायश्चित्तस्थलेऽपि पूर्वसिद्धाया एव जातेरुत्कर्षो भवति ।

### ( समुद्रोल्लङ्घनप्रायश्चित्तविचारः )

अथ प्रसङ्गात्समुद्रयानप्रायश्चित्तविचारः क्रियते । तत्र नौयानेन समुद्रमुल्लङ्घ्य द्वीपान्तरगमने तत्रत्यैर्यादृशैर्जनैः सह यादृशः संसर्गः स्यात्तदनुरोधेन तादृशसंसर्गदोषनिरासार्थं प्रायश्चित्तं कार्यमेव । तच्च संग्राहकमपि भवति । संग्राहकं व्यवहार्यताजनकम् । केवलं तत्र समुद्रोल्लङ्घनदोषनिमित्तप्रायश्चित्तं तु शुद्धिजनकमपि न व्यवहार्यतापादकम् । 'द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः' इति विशेषवचनात् । अस्यार्थः— समुद्रे नावा यानं दोषावहम् । तत्र कृतेऽपि प्रायश्चित्ते व्यवहार्यता तस्य न भवति । प्रायश्चित्तं तु तस्य चित्तशुद्धिद्वारा स्वकीयकर्माधिकारार्थं परलोकगतिप्रतिबन्धनिवारणार्थं चेति न तस्य वैयर्थ्यमाशङ्कनीयम् । अत्राब्धिपदमब्धिपारपरम् । वक्तृतात्पर्यानुरोधात् । समुद्रस्य यस्मिंस्तीरे नावमारूढस्तया नावा तस्मिन्नेव तीरेऽन्यत्र गतश्चेन्न तत्रोक्तो दोष इति संप्रदायसिद्धं प्राचीनार्वाचीनसकलग्रन्थकारसंमतं चेति तदनुरोधेन तथा वक्तृतात्पर्यानुमानात् । युक्तं चैतत् । यतोऽत्र तीर्थराजस्य समुद्रस्योलङ्घनमेव दूषकताबीजं न त्वन्यत् । अत्र नौशब्दो न व्यवच्छेदकः । इतरयानेन समुद्रोल्लङ्घनासंभवात् । कस्तर्हि तस्योपयोग इति चेदुच्यते । संनिधानप्रतिपत्त्यर्थं नौग्रहणम् । यथा—

> कर्णावतंसादिपदे कर्णादिध्वनिर्मितिः ।
> संनिधानादिबोधार्थम् (का० प्र० उ० ७) ॥

इत्यत्र कर्णपदं कर्णावस्थितिप्रतिपत्तये भवति तथा नाव्यवस्थितिप्रतिपत्तये नौग्रहणम् । अवस्थितिश्चात्र कायिकी मानसिकी वा । तेन यस्य स्वीयत्वेन नित्यं नौसंनिधानं तस्य प्रतिपत्तिः । नाविकस्येति यावत् । अथवा 'या प्रापणे' इति धातुपाठे पठितम् । यद्यपि प्रापणमिह गतिरित्युक्तं तथाऽपि 'णीञ् प्रापणे' इत्यत्रेव प्रापणरूपोऽर्थोऽपीह विवक्षितः । गतिमात्रार्थस्य विवक्षितत्वे तु या गतावित्येव वदेत् । तथा च तादृशप्रापणरूपार्थप्रतिपत्त्यर्थमिह नौग्रहणम् । तेन च यो नौसाधनेनान्यान्मनुष्यान् विक्रेयान्नानाविधान् पादार्थान्वा देशान्तरं प्रापयति तस्य नौयातृपदेन प्रतिपत्तिर्भवति । उभयथाऽप्युक्तार्थानुसारेण नौयातृपदे ताच्छील्यार्थे तृन्बोध्यः । ईदृशश्च नौयाता प्रायश्चित्तेन समुद्रोल्लङ्घनजदोषान्निर्मुक्तोऽपि पुनः समुद्रोल्लङ्घनोन्मुखत्वान्मनोवृत्तौ समुद्रोल्लङ्घनस्य सततमावश्यकत्वाच्च मनसा तादृशदोषादनिर्मुक्त इव भवतीत्यतः स लोके संव्यवहार्यो न भवतीत्युच्यते ।

## ( जातिपरिवर्तनविचारः )

'ब्राह्मणानां कर्मान्येन कृतं चेत्तेन कर्मणा सद्य एव स ब्राह्मणो भवितुमर्हति' इत्येतादृशः प्रलाप आधुनिकानां यः श्रूयते स तु गर्भस्रावेणैव गतार्थो भवति । तथाहि । ब्राह्मणानां कर्मेत्यस्य कोऽर्थः । ब्राह्मणत्वावच्छिन्नेन कृतमिति चेत्—मनुष्यमात्रेण कर्तुं शक्यस्याऽऽहारविहारादेर्ब्राह्मणेनापि कृतत्वात्तेन कर्मणा सर्वेऽपि ब्राह्मणा भवेयुः । अथ ब्राह्मणत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताविशिष्टं यत्कर्म तद्ब्राह्मणस्य कर्मेति चेत् तादृशकर्माचरणेऽधिकारसिद्ध्यर्थं तादृशकर्माचरणात्प्रागेव ब्राह्मणत्वापेक्षेति तेन कर्मणा ब्राह्मणत्वप्राप्तिः सुतरां वक्तुमशक्या । ब्राह्मणत्वस्य पूर्वमेव प्राप्तत्वात् । अथ यस्याप्राप्तं ब्राह्मणत्वं तेन क्षत्रियादिना तादृशं कर्म कृतं चेत्तेन तस्य ब्राह्मणत्वप्राप्तिः स्यादिति चेत्—नैतदपि वक्तुं शक्यम् । ब्राह्मणत्वावच्छिन्नोद्देश्यताकस्य कर्मणोऽन्येन कर्तुमशक्यत्वात् । अथ तत्सजातीयं कर्म ब्राह्मणेतरेण कर्तुं शक्यमिति चेत्किं तेन । अनधिकारिकृतस्य कर्मणो निष्फलत्वात् । अधिकारिकृतेन सदृशं तदिति चेदस्तु नाम । न तावता तेन कार्यनिष्पत्तिर्भवति । नह्यङ्गारपुत्रकसदृशेन गुञ्जाफलेन ज्वालोत्पादयितुं शक्या भवति । अथ

> 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
> ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्' ॥ (भ० गी० १८ । ४२ ) ।

इत्यत्र शमादि यदुक्तं तद्ब्राह्मणस्य कर्मेति चेत्—भ्रान्तोऽसि । नहि तत्र शमादिकं कर्म ब्राह्मणत्वजातिप्रयोजकत्वेनोक्तं किंतु ब्राह्मणत्वजातिप्रयोज्यत्वेन । स्वभावजमिति तत्रैवोक्तत्वात् । तथाच जातिसामान्यमैहिककर्मकृतमव्यवस्थितमुत जन्मकृतं व्यवस्थितं चेति प्रश्ने जन्मकृतमेव तद्व्यवस्थितमेव चेत्युत्तरम् । तथाहि । ब्राह्मणत्वादिजातिः किं जीवात्मनिष्ठोत शरीरनिष्ठाऽथवोभयनिष्ठा । नाऽऽद्यः । मनुष्यपशुपक्ष्यादिषु जीवात्मस्वरूपे वैलक्षण्यादर्शनेनायं मनुष्योऽयं पशुरित्यादेः पार्थक्येन जायमानस्य व्यवहारस्याभावप्रसङ्गात् । शरीरवैलक्षण्यस्य तादृशव्यवहारमूलकत्वेनानुभवसिद्धत्वाच्च । न द्वितीयः । गोब्राह्मणादिवधे प्राणवियोजकस्य गोहत्याजन्यदुष्कृताभावप्रसङ्गात् । प्रेतदाहकस्य तत्प्रसङ्गाच्च । तृतीयस्तु कल्पः पुनर्विकल्पते । मनुष्यत्वादिजातिः किं शरीरोपसृष्टात्मनिष्ठोताऽऽत्मोपसृष्टशरीरनिष्ठा । नाऽऽद्यः । मनुष्यत्वपशुत्वादिजातेस्तद्व्याप्यब्राह्मणत्वगोत्वादिजातेश्च बाह्येन्द्रियजन्यप्रत्यक्षस्यानुभवसिद्धत्वात् । आत्मनश्च तादृशप्रत्यक्षासंभवात् । अथ तादृशं जातिप्रत्यक्षमात्मोपसर्जनीभूतशरीरप्रत्यक्षमूलकमिति चेद्धन्त किमनया कल्पनया । प्रत्यक्षासिद्धा जातिर्यस्य प्रत्यक्षं तत्रैव प्राधान्येन कल्प्यताम् । आत्मैव तदुपसर्जनीभूतोऽस्तु । तथाच मनुष्यत्वादिजातिर्जीवच्छरीरनिष्ठैव । तथा च

जातेः शरीरविशेषान्वयव्यतिरेकानुविधायित्वं सिद्धम् । एतादृश्याश्च जातेः परिवर्तनं शरीरपरिवर्तनमन्तरेण सुतरां दुर्घटम् । नहि विद्यमान एव कम्बुग्रीवादिमदाकारे यत्नसहस्रेणापि घटः शरावतां प्राप्नोति । तथाच कर्म जातिप्रयोजकं भवेच्चेत्प्रणाड्यैव न कथमपि साक्षात् । जन्मद्वारैव तज्जातिप्रयोजकं भवति । अतो न कथमपि ऐहिकं कर्मैहिकस्य जात्यन्तरस्य कारणं संभवति । तथाच जन्मसिद्धा जातिर्न क्वापि कथमपि विनिवर्तते । शरीरपरिवर्तनासंभवात् । तथा चोक्तम्—

यच्छरीरविनिवेशविशेषं संश्रिता सपदि या खलु जातिः ।
तच्छरीरपरिवर्तनं विना सा कथं नु विनिवर्ततेतराम् ॥ इति ।

अत एव 'तत्याज माहिषं रूपम्'... 'ततः सिंहोऽभवत्सद्यः...' इत्येवं शरीरपरिवर्तनं वर्णितं मार्कण्डेये । ननु मनुष्यत्वव्याप्यानां ब्राह्मणत्वक्षत्रियत्वादीनां बह्वीनां जातीनामेक एव शरीरसंनिवेशविशेष आश्रय इति तत्र तादृशाश्रयीभूतसंनिवेशविशेषस्य परिवर्तनमन्तरेणैव ब्राह्मणत्वादिजातिपरिवर्तनं कर्मविशेषेण सुलभमिति चेन्मैवं वादीः । जात्यन्तरप्राप्तौ या शरीरपरिवर्तनापेक्षा प्रागुक्ता सा किं शरीरसंनिवेशविशेषवैषम्यमूलिकाऽऽहोस्विच्छरीरभेदमूलिका । तत्राऽऽद्यः पक्षो नावकल्पते । जन्मत एव हि शरीरसंबद्धा जातिर्भवति । शरीरे बाह्यं धातुत्रयं मातृतः, तदन्तस्थं धातुत्रयं पितृतः प्राप्यते । अतो मातुः पितुश्च या जातिः सैव जन्मकाल एव च शरीरेण संबध्यते । मातुः पितुश्च मिथो भिन्नजातीयत्वे सुखाद्युपभोगे विशेषोपयोगित्वेन प्राधान्याद्बाह्यत्वाच्च बाह्यधातुत्रयानुसारेण मातृजातिरेव प्राप्यते । एतच्चानुलोमसंकरे सति भवति । विलोमसंकरे तु आन्तरदुष्टधातुत्रयोपरागेण बाह्यधातुत्रये दोषाधिक्यात्तद्वशाच्चाण्डालादिजातिर्वाचनिकी भिन्नैवेत्यन्यत् । तथा च जन्मतः क्षत्रियादिना मातृतो यदि ब्राह्मणत्वं न प्राप्यते तत्र ब्राह्मणक्षत्रिययोः संनिवेशविशेषसाम्येऽपि कथं कर्मणा ब्राह्मणत्वजातिप्राप्तिः स्यात् । तथा च जात्यन्तरप्राप्तौ शरीरपरिवर्तनापेक्षा शरीरभेदमूलिकैवेति सिद्धम् । स च शरीरभेदः सिंहगजयोरिव ब्राह्मणक्षत्रिययोरपि समानः । इयांस्तु विशेषः । सिंहगजादौ संनिवेशविशेषवैषम्यसमानाधिकरणः शरीरभेदः । ब्राह्मणक्षत्रिययोस्तु संनिवेशविशेषसाम्यसमानाधिकरणः शरीरभेदः । जात्यन्तरप्राप्तिप्रतिबन्धको भेदस्तूभयत्र समान एव भवति । यच्च विश्वामित्रेणैहैव जन्मनि ब्राह्मणत्वजातिर्लब्धेत्यैतिह्यं तदर्थवादोऽस्तु । तस्य सत्यत्वमुपपादनीयं चेच्छरीरपरिवर्तनद्वारैव तत्र जात्यन्तरप्राप्तिरिति कल्पनीयम् । तच्च शरीरपरिवर्तनं न मातृयोनितो जन्मद्वारा । किंतु तत्रैव जन्मनि तपोविशेषबलेनेत्यन्यत् । किं च तत्र नैव ब्राह्मणस्य कर्मणा ब्राह्मणत्वजातिर्लब्धा । किं तु क्षत्रियाधिकारविहितेनैव । अत एव गीतायां 'स्वकर्मणा तमभ्यर्च्य

सिद्धिं विन्दति मानवः' (भ० गी० ४।२९) इत्युच्यते । सर्वथा 'ब्राह्मणेतरेण ब्राह्मणत्वजातिर्ब्राह्मणस्य कर्मणैहैव प्राप्यते' इत्युक्तवतामभिनिवेशवशीकृतचेतसां कुहेवाक एवेति सिद्धम् । किंच ब्राह्मणस्य कर्मणा ब्राह्मणत्वजातिरन्येन प्राप्यत इति यदुच्यते तत्र तादृशजातिप्राप्तिस्तादृशकर्मोत्तरकाल एव न तु कर्मारम्भसमकालं ततः प्रागेव वा । इतरथा तु तत्र कर्मणस्तादृशजात्यन्तरप्राप्तिकारणत्वमेव दुर्निरूपं स्यात् । कर्मोत्तरकालं च जायमाना ब्राह्मणत्वजातिप्राप्तिः किमर्थेति वक्तव्यम् । ब्राह्मणाधिकारविहिते कर्मण्यधिकारसिद्ध्यर्थमिति चेन्न । तादृशजातिप्राप्तेः प्रागेव तादृशकर्मणस्त्वयैव संपादितत्वात् । तदनधिकारिकृतमितिचेदस्तु किं तेन । अनधिकारिकृतात्कर्मणः फलप्राप्तिर्न स्यादिति चेत्—व्याहतं त्वद्वचः । ब्राह्मणत्वप्राप्तिरूपफलस्य त्वयैवोक्तत्वात् । तथाच यथाऽनधिकारिकृतादपि कर्मणः सकाशाद्ब्राह्मणत्वजातिरूपं फलं प्राप्यत इति त्वयेष्यते तथा पश्चात्क्रियमाणादपि कर्मणोऽनधिकारिकृतादपि फलप्राप्तिर्भवतीतीष्यतां किं ब्राह्मणत्वप्राप्तिर्भवतीति विशिष्यवचसा । सर्वथा दुराग्रह एवायमिति सिद्धम् ।

## ( ब्राह्मणत्वावान्तरजातीनां मिथो विवाहसंबन्धे विचारः )

अथ ब्राह्मणत्वावान्तरजातीनामन्योन्यं विवाहसंबन्धो भवति न वेति विचार्यते ।

' विवाहे सोमश्राद्धे च अग्न्याधाने तथैव च ।
एतैः स्वजातिभिः कुर्यादन्यथा पतितो भवेत् ' ॥

इति वचनेन विवाहादौ व्यवस्था क्रियते । विवाहे कन्याप्रतिग्रहार्थमग्निसाध्ये कर्मण्यार्त्विज्यार्थं श्राद्धे क्षणस्वीकरणार्थं च कश्चिदपेक्ष्यते । स च कीदृश इत्याशङ्कायामुक्तवचने स्वजातिभिः कुर्यादित्युक्त्या स्वजातीय एव ग्राह्यो नान्यजातीय इति नियम्यते । जातिश्चात्र ब्राह्मणत्वावान्तरजातिरेव ग्राह्या न तु ब्राह्मणत्वरूपा । क्षत्रियादेर्याजनप्रतिग्रहादावनधिकारेण तेषामुक्तस्थले प्राप्तेरेवासंभवेन स्वजातिभिः कुर्यादित्यस्य व्यवच्छेद्याभावात् । ' अध्वर्यूद्गातृहोतॄणां सन्ति सूत्राण्यनेकशः ' इत्युपक्रमे प्रतिवेदं यत्सूत्रानेकत्वं तन्मूलकसंशयस्योद्भावनेन तादृशसंशयस्य निरासार्थं स्वजातिभिः कुर्यादित्युक्तत्वेन ब्राह्मणत्वजातिग्रहणे तादृशसंशयनिरासस्यासंभवाच्च । अत एव चावान्तरजातिरपि न तेलङ्गत्वदेशस्थत्वकोकणस्थत्वकरहाटकत्वादिरत्र ग्रहीतुं शक्यते । देशस्थत्वादिजातीनां सूत्रानेकत्वमूलकत्वाभावात् । किं च देशस्थत्वादिजातयो लौकिक्यस्तत्तद्देशनिवासादिहेतुका न क्वापि कर्मविधावुद्देश्यादिविशेषणत्वेन रूपान्तरेण वा निर्दिष्टा दृश्यन्त इति कथं ताः स्वजातिभिः कुर्यादित्यत्र कर्मविशेषव्यवस्थापकवचने ग्रहीतुं शक्या भवेयुः । बह्वृचत्वयाजुषत्वादिजातयोऽप्यत्र न ग्राह्या भवन्ति । तासां ब्राह्मणत्वावान्तरजातित्वेऽपि सूत्रानेकत्वप्रयुक्तो यः किं सूत्रं परिग्राह्यमिति संशयस्तन्निरासाय तासामनुपयोगात् । याश्च बह्वृचत्वयाजुषत्वादीनामवान्तरजातयः शाखाभेदमूलिकाः

शाकलत्वबाष्कलत्वबौधायनत्वापस्तम्बत्वहिरण्यकेशीयत्वकाण्वत्वमाध्यंदिनत्वादयस्ताः सूत्रभेदनियतत्वात्सूत्रानेकत्वमूलकोक्तसंशयनिरासाय प्रभवन्त्येव । अतस्ता एवात्र स्वजातिभिरित्यत्र जातिपदेन परिगृह्यन्ते । तथा च स्वशाखीयैः सहैव विवाहः स्वशाखीयानामेवाऽऽर्त्विज्यं स्वशाखीया एव च श्राद्धे विप्रा इति पर्यवसितम् ।

ननु नायं सिद्धान्तो वक्तुं शक्यः । भिन्नशाखीयैः सहापि विवाहस्येष्टत्वात् । अत एव मधुपर्को वरशाखयैव कार्य इत्युक्तेः सार्थक्यम् । पूज्यस्य वरस्य पूजकस्य कन्यापितुश्च भिन्नशाखीयत्वे पूजकशाखया प्राप्तो मधुपर्क इति तत्र तद्बाधनाय हीयमुक्तिः । स्वशाखीयैरेव विवाहे तु पूज्यपूजकयोर्भिन्नशाखीयत्वाभावेन मधुपर्को वरशाखयैवेत्युक्तेर्निष्फलत्वं स्पष्टमेव । तथाऽग्निसाध्ये यज्ञादिकर्मण्यार्त्विज्यमपि भिन्नशाखीयानामिष्टमेव । न केवलं शाखाभेदेऽप्यार्त्विज्यमिष्यत इत्येव किं तु वेदभेदेऽप्यार्त्विज्यमिष्यते । यज्ञस्यानेकवेदसाध्यत्वात् । तथा चाऽऽपस्तम्बमहर्षिणा परिभाषासूत्रे यज्ञं प्रक्रम्योक्तम्–'स त्रिभिर्वेदैर्विधीयत ऋग्वेदयजुर्वेदसामवेदैः । ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ । यजुर्वेदेनाग्निहोत्रम् । सर्वैरग्निष्टोमः' (आ० स्त० परि० १।३।६) इति । श्राद्धेऽपि तथेष्यत एव । अत एव

'ऋग्वेदिनं च पित्रर्थे याजुषं तु पितामहे ।
प्रपितामहे सामगं च भोजयेच्छ्राद्धकर्मणि ॥
अथर्ववेदिनं वैश्वदेवे पित्र्ये च भोजयेत्' ।

इति संगच्छते । तथा चैतैः स्वजातिभिः कुर्यादिति व्यवस्था न समीचीनेति प्रतिभातीति चेत्–उच्यते । एतैः स्वजातिभिः कुर्यादित्यस्यायमर्थः— एतच्छब्देन 'यत्रास्ति योनिसंबन्धः सूत्रज्ञातिकुलोचितः' इति पूर्वोक्तयच्छब्दार्थस्य परामर्शः । सूत्रोचितसंबन्धवन्तो ज्ञात्युचितसंबन्धवन्तः कुलोचितसंबन्धवन्तश्च ये तादृशैः स्वजातिभिः सह विवाहादिकं कर्म कुर्यादिति । अत्र ज्ञात्या कुलेन वा कृतं कंचित्समयं तदन्तर्गतोऽपि कश्चिद्यो नानुमन्यते स तया ज्ञात्या कुलेन वा तदनुमतिपर्यन्तं बहिरिव कृतो भवति । तदानीं तेन सह विवाहादि कर्म मा भूदेतदर्थं ज्ञातिकुलोचित इत्युक्तम् । एवं रीत्याऽन्यादृशमप्यस्य प्रयोजनमूह्यम् । अथ सूत्रोचितसंबन्धवद्भिरिति किमर्थम् । स्वजातिभिरित्यनेन सिद्धत्वात् । स्वजातिभिरित्यस्य स्वशाखीयैरित्यर्थ इति प्रागुक्तमेव । ये च स्वशाखीयास्ते सूत्रोचितसंबन्धवन्तो वर्तन्त एवेत्यव्यभिचाराद्व्यावर्त्यालाभः । उच्यते । वेदभेदेऽपि वेदान्तरीयशाखाविशेषवन्तो वेदान्तरीयशाखाविशेषवतां सूत्रज्ञातिकुलोचितसंबन्धवन्तो भवन्ति तत्संग्रहार्थं सूत्रपदोपादानम् । यथा बह्वृचविशेषाणां शाकलशाखीयानां याजुषविशेषा हिरण्यकेशीयाः । ननु सूत्रपदोपादानेऽपि तत्संग्रहो न संभवति । स्वजातिभिरित्यनेन तेषां व्यावृत्तिप्रसङ्गात् । नहि शाकलानां हिरण्यकेशीयाः स्वशाखीया भवन्ति । बह्वृचविशेषाणां शाक-

लानां बह्वृचविशेषा एव च बाष्कला वेदैक्येऽपि स्वशाखीया न भवन्ति किमुत वेदभेदे याजुषा हिरण्यकेशीयास्तेषां स्वशाखीयाः स्युः । सत्यम् । स्वशाखिभिरितिपदं न व्यावर्तकम् । सूत्रपदवैयर्थ्यप्रसङ्गात् । किमर्थं तर्हि तदुपादानमिति चेदुच्यते । सूत्रज्ञातिकुलोचितसंबन्धवद्भिः सह कर्म कर्तव्यमिति यदुक्तं तत्स्वशाखित्वेन रूपेण तैः सह कर्तव्यमित्यर्थज्ञापनार्थं तदुपादानात् । ये सूत्रज्ञातिकुलोचितसंबन्धवन्तस्ते स्वशाखीया इति मत्वा तैः सह कर्म कर्तव्यमिति यावत् । तत्र ये पितृपितामहादिपरम्पराप्राप्तशाखया स्वशाखिनस्तत्र तैः सह कर्म स्वशाखित्वेन रूपेण भवत्येव । ये च सूत्रज्ञातिकुलोचितसंबन्धवन्तो न पित्रादिपरम्पराप्राप्तशाखया स्वशाखिनस्तेऽपि स्वशाखिन इति मत्वा तेन रूपेण तैः सह कर्म कर्तव्यं भवति । स्वशाखिभिरित्युक्तिबलात्तत्र तच्छाखायां स्वकीयत्वमतिदिश्यते । किमस्यातिदेशस्य प्रयोजनमिति चेत्—उच्यते । अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावस्यातिदेशस्वभावसिद्धत्वेन यत्र सूत्रज्ञातिकुलोचितसंबन्धवतः परशाखीयत्वं तत्र वस्तुतो विद्यमानस्यापि परशाखीयत्वस्य स्वकार्यनिर्वर्तनक्षमत्वाभावेन शाखारण्डत्वदोषाभावः । अन्यथा

‘ न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।
आचरन्परशाखोक्तं शाखारण्डः प्रकीर्तितः ’ ॥

इति शाखारण्डत्वदोषो दुर्वारः स्यात् । अथवा परशाखीयत्वस्य कार्यनिर्वर्तनक्षमत्वेऽपि न कर्त्रैतत्कर्म परशाखीयत्वेनानुष्ठितं भवति किंतु स्वशाखीयत्वेनैव । तेन न शाखारण्डत्वदोषः । यत्र परशाखीयत्वेनानुष्ठानं तत्रैव स दोषः । अवश्यं चैतदभ्युपेतव्यं भवति । इतरथा यत्कर्म स्वशाखायां परशाखायां चेत्युभयत्राप्याम्नातं तदनुष्ठाने शाखारण्डत्वदोषप्रसङ्गः । पक्षद्वयेऽपि स्वशाखीयत्वातिदेश आवश्यक एव शाखारण्डत्वदोषनिवृत्तय इति । नन्वेवं शाखारण्डत्वदोषाभावेऽपि परशाखोक्तकर्माचरणं कथं स्यात् ।

‘ बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ’ ॥

इति वचनेन, स्वगृह्योक्तातिरिक्ताचरणस्य निषेधादिति चेद्भ्रान्तोऽसि । नह्यनेन वचनेन स्वगृह्योक्तातिरिक्ताचरणं निषिध्यते । किंतु स्वगृह्योक्तमात्राचरणे सति न किंचिदपि तत्र कर्मणि वैगुण्यमिति प्रतिपाद्यते । अनेन परशाखोक्तोपसंहारस्य पाक्षिकत्वं सूचितं भवति । नन्वेवं सर्वत्रैव स्वगृह्योक्तमात्राचरणेन कर्मसिद्धौ परशाखीयकर्माचरणे कुतः प्रवृत्तिरिति चेत्सत्यम् । यत्र परशाखोक्तकर्माचरणस्याऽऽवश्यकत्वं तत्र नित्यं प्रवृत्तिर्भवत्येव । यथा मधुपर्को वरशाखयैव कार्य इत्यादौ । यथा वा बह्वृचानां परशाखोक्तेऽग्निहोत्ररूपे कर्मणि । तद्धि ऋग्वेदपठितहौत्रमन्त्रसाफल्यायाऽऽवश्यकमेव । तदुक्तम्—

' यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ' इति ॥

यत्स्वशाखायां नाऽऽम्नातं तदपि विद्वद्भिरनुष्ठेयम् । एतावन्मात्रोक्तौ स्वशाखायां परशाखायां च नाऽऽम्नातं स्वकपोलकल्पितं किंचिदनुष्ठेयं स्यादत उक्तं पारक्यमिति । यजुर्वेदोपांशुत्वं बह्वृचैरनुष्ठेयं स्यादत उक्तमविरोधीति । तद्धि उच्चैर्ऋचेति विधीयमानेन स्वशाखागतेनोच्चैष्ट्वेन विरुध्यते । तथा स्वसूत्रेण यत्परशाखागतं किंचिन्नशब्देन निषिध्यत एवशब्देन वा व्यवच्छिद्यते तदपि विरुद्धत्वादेव नानुष्ठेयं भवति । एवमपि स्वशाखोक्तादधिकानां शाखान्तरोक्तानां प्रधानाङ्गानामनुष्ठानप्रसङ्गस्तदर्थमुक्तमग्निहोत्रादिकर्मवदिति । अग्निहोत्रं यथा यजुःशाखीयमपि बह्वृचैरवश्यमनुष्ठातव्यं भवति । अन्यथा ऋग्वेदे हौत्रमन्त्रपाठवैयर्थ्यापत्तेः । तथा यदवश्यानुष्ठेयत्वेन सूचितं तदेव परशाखीयमनुष्ठेयं नान्यदिति । एतदर्थमेवाग्निहोत्रादिकर्मवदिति दृष्टान्तोपादानम् । यच्च स्वशाखायां सामान्यतः कर्तव्यत्वेनोक्तं विशेषतस्तस्येतिकर्तव्यता नोक्ता । सा च परशाखायामुक्ता । सा च स्वशाखायामनुक्ताऽप्यनुष्ठेया भवति । सामान्यतः स्वशाखायां कर्तव्यतया बोधनात् । सामान्यस्य च निर्विशेषं न सामान्यमिति न्यायेन क्वचिद्विशेषे पर्यवसानमावश्यकमेवेति विशेषरूपेणेतिकर्तव्यताया अवश्यानुष्ठेयत्वं सूचितं भवति । एवमन्यदप्यूह्यम् । दृष्टान्तोपादानेन परशाखीयेऽनुष्ठेये कर्मणि स्वशाखीयत्वातिदेशे बीजं च सूचितं भवति । दृष्टान्तबलाद्धि स्वशाखोक्तेन केनापि सूचितस्यैव स्वशाखानुक्तस्य संग्रहो भवति । सूचनं च संबद्धस्यैवार्थस्य भवति न कथमप्यसंबद्धस्यार्थस्य । संबद्धयोश्च द्वयोरर्थयोरन्यतरधर्मस्यान्यत्रातिदेशः सुलभ इति । अथात्र सूत्रज्ञातिकुलो-

( विवाहादौ सूत्रज्ञातिकुलोचितसंबन्धवत्साहित्यं कीदृशमिति विचारः )

चितसंबन्धवद्भिः सह विवाहादौ कर्म कुर्यादित्युक्तं तत्र साहित्यं कीदृशमिति विचार्यते । तत्र विवाहे कन्यादातृत्वप्रतिग्रहीतृत्वसंबन्धेन कन्यापितुर्वरेण वरस्य कन्यापित्रा च साहित्यम् । एतच्च साहित्यमपेक्षितशाखानुसारिकर्माचरणेन । यथा यजमानो बह्वृचस्तस्याऽऽध्वर्यवार्थं यजुर्वेदान्तर्गता या शाखाऽपेक्ष्यते तच्छाखयैवाऽऽध्वर्यवं कर्म इत्येव । तादृशाध्वर्यवकर्मकर्ता तु तच्छाखीय एवेति नाऽऽग्रहः । एवं कृष्णयजुर्वेदान्तर्गतेन रुद्रेणाभिषेकस्तदन्तर्गतैर्मन्त्रैरुदकशान्त्यनुष्ठानं च कृष्णयजुर्वेदीयेनैव विप्रेण कार्यमिति नाऽऽग्रहः । बह्वृचादिनाऽपि तद्भवति । केवलं याजुषधर्मेणैव तत्कर्तव्यमित्याग्रहः । एवमृग्वेदान्तर्गतपवमानेनाभिषेकोऽपि बह्वृचेनैव कार्य इति नाऽऽग्रहः । याजुषादिनाऽपि स भवति । परमृग्धर्मेणैव । श्राद्धे तु श्राद्धीयान्नादिस्वीकर्तृत्वेन साहित्यम् । अथ कस्याः शाखायाः का

( सूत्रोचितसंबन्धवच्छाखाविचारः )

शाखा सूत्रोचितसंबन्धवती भवति । उच्यते । एकस्मिन्नेव वेदे या अनेकाः शाखास्तासु कस्या अप्यन्यतमायाः काऽप्यन्यतमा सूत्रोचितयोनिसंबन्धवती न भवति । यच्च तद्वेदानुसारि कर्म तत्तत्र कर्तुः स्वशाखया सिध्यत्येव । यथा ऋग्वेदान्तर्गतशाकलशाखीयेन कर्त्रा ऋचा हौत्रादि कर्म यत्संपादनीयं तत्तदीयशाकलशाखानुसारेणैव सिध्यति । न तत्र बाष्कलादिशाखान्तरस्यांशतोऽप्यपेक्षा । यथा वा याजुषेण हिरण्यकेशीयेन कर्त्रा यदाध्वर्यवादि कर्म संपादनीयं तत्तस्य तदीययैव शाखया सत्याषाढसूत्रानुसारेण सिध्यति । यदि तथाविधे स्थले क्वचिच्छाखान्तरोक्तस्य संग्रहः कर्तव्यः स्यात्तर्हि तत्स्वसूत्रोक्तमिति मत्वैव कार्यः । स्वसूत्रोक्तत्वं च तस्य न तत्र सूत्रान्तरे स्वीयत्वातिदेशेन किंतु स्वसूत्रोक्तं तत्र सूत्रान्तरोक्तस्याप्युपलक्षणमिति मत्वा । यद्यपि तत्र सूत्रे स्वीयत्वातिदेशो नास्ति तथाऽपि

' न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।
आचरन्परशाखोक्तं शाखारण्डः प्रकीर्तितः ' ॥

इत्येवं शाखारण्डत्वदोषो नाऽऽपादनीयः । स्वसूत्रोक्तार्थस्योपलक्षणत्वाङ्गीकारेणानुष्ठेयार्थस्य स्वशाखोक्तत्वेनैवानुष्ठानात् । वेदभेदे तु वेदान्तरीयशाखाया वेदान्तरीयशाखा सूत्रोचितयोनिसंबन्धवती भवति । तत्र शाखारण्डत्वदोषनिरसनार्थं स्वीयत्वातिदेशस्याऽऽवश्यकत्वात् । उपलक्षणेन तु न सिद्धिः । उपलक्ष्यार्थस्य वक्तृतात्पर्यविषयीभूतत्वानिश्चयात् । ऋग्वेदीयशाकलशाखायां हौत्राद्यर्थप्रतिपादनाय प्रवृत्तस्य सूत्रकारस्य कृष्णयजुर्वेदीयाध्वर्यवाद्यर्थप्रतिपादने तात्पर्यमस्तीति वक्तुं न शक्यते । तस्य ऋङ्मन्त्रव्यवस्थापनाय प्रवृत्तत्वात् । वक्तुः प्रतिपाद्यत्वेनाभिमत एव ह्यर्थ उपलक्ष्यो भवति । स्वीयत्वातिदेशश्च वेदान्तरीयशाखाविशेषस्य वेदान्तरीयशाखाविशेष एव । न तु सर्वस्याः सर्वासु । सर्वैरग्निष्टोमं इत्येवमग्निष्टोमस्य सर्ववेदसाध्यत्वेन सर्वस्यैव स्वेतरवेदसाध्यकर्मापेक्षायां प्रतिवेदं तादृशवेदान्तर्गतायां कस्यांचिदेकस्यां शाखायां स्वीयत्वमवश्यं प्रकल्पयितव्यं भवति । तथा च बह्वृचविशेषस्य यजुर्वेदीया काचिदेका शाखा तथा सामवेदीया काचिदेकाऽथर्ववेदीया च काचिदेकेत्येवं शाखात्रयं स्वीयं भवतीति तत्तच्छाखानुसारेण तत्तद्वेदसाध्ये कर्मणि जाते सर्वैर्वेदैर्मिलित्वाऽग्निष्टोमः सिध्यति । यजुर्वेदीयस्य सामवेदीयस्याथर्ववेदीयस्य चाप्येवमेव बोध्यम् । तत्र यस्याः शाखाया या शाखा तत्तत्सूत्रप्रतिपाद्यविषये भूयसांऽशेनान्तरतमा तयोरन्यतरशाखीयस्य तदितरशाखायां स्वीयत्वं कल्पयितुं युक्तं न त्वतथाविधायाम् । यथा ऋग्वेदान्तर्गतस्य शाकलशाखीयस्य कृष्णयजुर्वेदान्तर्गतायां तैत्तिरीयशाखायां स्वीयत्वम् । तथा विधस्य बाष्कलस्य च शुक्लयजुर्वेदान्तर्गतायां माध्यं-

दिनीयायाम् । तैत्तिरीयशाखीयस्य शाकलशाखायां माध्यंदिनस्य च बाष्कलशाखायां च स्वीयत्वमर्थादेव सिद्धम् ।

( अस्पृश्यस्पर्शनिषेधविषयकाक्षेपखण्डनम् )

यत्तु—

' प्रायश्चित्तं यथोद्दिष्टमशक्यं दुर्बलादिभिः ।
कार्यो ह्यनुग्रहस्तेषां लोकसंग्रहकारणात् ' ॥ ( देवलः )

इत्यादिवचनानुसारेण देशकालौ विचिन्त्य लोकसंग्रहं च विचिन्त्य अस्पृश्यस्पर्शो न दोषत्वेन आहत्य परिहार्यः ' इत्युक्तं तन्न मनोरमम् । प्रायश्चित्तं यथोद्दिष्टमित्यस्य वचनस्य अस्पृश्यस्पर्शे दोषाभावस्य च कः संबन्ध इति वक्तव्यम् । प्रायश्चित्तं चिकीर्षतां यथोद्दिष्टं प्रायश्चित्तं कर्तुमशक्नुवतां पापिनामनुग्रहः कार्य इति वचने प्रतिपादितम् । अस्पृश्याश्च न प्रायश्चित्तं चिकीर्षन्ति नापि चास्पृश्याः सर्वे प्रायश्चित्तं कर्तुमसमर्थाः । तथा चास्पृश्यस्पर्शो दोषत्वेन न परिहार्य इत्यत्र कथमिदं वचनं प्रमाणं भवति । न चास्माद्वचनाद्यथा प्रायश्चित्तं चिकीर्षन्तो यथोद्दिष्टं प्रायश्चित्तं कर्तुमसमर्थाः पापिनोऽनुग्राह्या भवन्ति तथैतेऽन्त्यजादयोऽस्पृश्या अनुग्राह्या इत्येवं दृष्टान्तवशेनोक्तवचनोल्लेख इति वाच्यम् । अभिप्रायापरिज्ञानात् । अनुग्रहः कार्य इत्युक्तवतो देवलस्य कीदृशोऽनुग्रहोऽभिप्रेतः । अकृतप्रायश्चित्तानामपि संग्राह्यत्वमित्येवं रूपोऽनुग्रहोऽभिप्रेतश्चेत्प्रायश्चित्तमचिकीर्षतामपि संग्राह्यत्वप्रसङ्गः । वचने यथोद्दिष्टमशक्यमिति पदानर्थक्यप्रसङ्गश्च । किंचानुग्रहः कार्य इत्यत्र लोकसंग्रहकारणादित्येवं देवलेन लोकसंग्रहो हेतुत्वेनोक्तः । यद्यपि लोकसंग्रहोऽनुग्रहस्य फलभूतस्तथाऽप्यन्नेन वसतीत्यत्रेव फलभूतोऽपि लोकसंग्रहोऽत्र हेतुत्वेन निर्दिष्टः । लोकानां संग्रहो लोकसंग्रहः । संग्रहः सम्यगवबोधः । ग्रहेर्ज्ञानार्थकत्वात् । अवबोधस्य सम्यक्त्वं च सन्मार्गप्रवृत्तिप्रयोजकत्वेन । असन्मार्गनिवृत्तिप्रयोजकत्वेन च । तत्र सन्मार्गान्निवृत्तिर्न निषेधसाध्या । तस्याः स्वाभाविकत्वात् । किं तु सन्मार्गे प्रवृत्तिरेव विधिसाध्या । तस्या निसर्गतः प्राप्त्यभावात् । असन्मार्गे तु प्रवृत्तेर्न विधिसाध्यत्वम् । तस्याः स्वाभाविकत्वात् । किं तु तत्र निवृत्तिरेव निषेधसाध्या । तस्या निसर्गतः प्राप्त्यभावात् । एवं स्थिते यद्यकृतप्रायश्चित्तानामपि पापिनामनुग्रहः स्यात्तर्हि तत्र दूर एव निरुक्तो लोकसंग्रहः । प्रत्युत दुराचरणे प्रवृत्तिर्दृढा स्यात् । प्रायश्चित्ताचरणक्लेशमनुभवतो ह्यग्रिमक्लेशभिया दुराचरणान्निवृत्तिर्भवति । अकृतप्रायश्चित्तानामप्यनुग्रहे तु न क्लेशानुभवः, तत एव चाग्रिमक्लेशभीतिरपि शिथिलैवेत्यसन्मार्गप्रवृत्तिरप्रतिहतैव प्रसरेदिति दूरापास्त एव तत्र लोकसंग्रहः स्यात् । अतो यादृशेऽनुग्रहे निरुक्तलोकसंग्रहसंभवस्तादृश एवात्रानुग्रहो वाच्यः ।

नन्वकृतप्रायश्चित्तानामनुग्रहे मा भून्नाम निरुक्तो लोकसंग्रहः । सहासनैकपङ्क्ति-भोजनकन्यादानप्रतिग्रहादिसंबन्धयोग्यतापादनरूपो लोकसंग्रहस्तत्र संभवत्येवेति चेन्मैवम् । ईदृशो लोकसंग्रह उक्तलोकसंग्रहपूर्वकः स्याच्चेदस्तु । ईदृशः केवलो लोकसंग्रहो न स्मृतिकाराभिमतः । किं तु सन्मार्गप्रवृत्त्यादिप्रयोजकज्ञानरूपनिरुक्तलोकसंग्रहपूर्वक एव । अन्यथा तत्र तत्र प्रायश्चित्तोपदेशवैयर्थ्यापत्तेः ।

'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि'

इत्यत्र गीतायामपि उक्तसम्यगवबोधरूप एव लोकसंग्रहो भाष्यकाराद्यभिमतः । अतोऽत्र तादृशलोकसंग्रहानुसारेण यथोद्दिष्टप्रायश्चित्तस्य गुरुत्वे दौर्बल्येन तदाचरणा-समर्था लघुप्रायश्चित्तेन संग्राह्या इत्येवंरूपोऽनुग्रहो वाच्यः ।

'देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्यात्' (याज्ञ० अ० ३।५।२९३) ॥

इति ब्रुवन्याज्ञवल्क्योऽप्येतदेवाभिप्रैति । किंत्वेवमनुग्रहे कथं तद्दृष्टान्तवशेना-स्पृश्यानां स्पर्शस्य दोषाभावः साध्यते ।

किं च 'देशकालौ विचिन्त्य लोकसंग्रहं च विचिन्त्य अस्पृश्यस्पर्शो न दोषत्वेनाऽऽ-हत्य परिहार्यः' इतीयं या वाचोयुक्तिस्तस्याः कोऽर्थः । दोषत्वेनेति न नञर्थेऽन्वेति । दोषो हि परिहारे हेतुः स्यान्न तन्निषेधे । तथा च तस्य परिहार एवान्वयो वाच्यः । दोष-मूलकपरिहारस्य निषेधे निषेध्यभूतपरिहारविशेषणीभूतं दोषत्वं विशिष्टस्य वैशिष्ट्यमिति न्यायेन निषेध्यशरीरे प्रविष्टं भवति न वा । न चेदस्पृश्यस्पर्शस्य दोषत्वं भवताऽभ्यनुज्ञातं स्यात् । विद्यमाने च दोषत्वे भवदुक्तः परिहारनिषेधः किंमूलक इति वक्तव्यम् । न तावच्छास्त्रं तत्र मूलम् । अस्पृश्यस्पर्शस्य दुष्टत्वे विद्यमाने तादृशस्पर्शपरिहारस्यैव शास्त्रसिद्धत्वं स्यान्नतु कथंचिदपि तत्परिहारनिषेधस्य । समाजसंघटनादिकं लौकिकमेव तत्र किंचिन्मूलमिति चेत्तादृशं तत्र किंचित्कारणं संभवति न वेत्यस्यार्थस्य निर्णयं पक्षपातरहिता याथात्म्येन समाजसंघटनातत्त्ववेत्तारः कुर्वन्तु, सर्वथाऽस्पृश्यस्पर्शः शास्त्रानिषिद्ध इत्ययमुद्घोषो वृथैव । अथास्पृश्यस्पर्शस्य दोषत्वमपि निषेध्यकुक्षौ प्रविशतीति ब्रूषे चेदस्पृश्यस्पर्शो न दोषावह इत्यत्र किं मूलम् । अत्र च लौकिकं किंचित्समाजसंघटनादिकं न कथमपि प्रमाण-पदवीमारोहति । यतो दोषस्तदभावश्च तादृशस्थले शास्त्रैकसंवेद्यो न लौकिकप्रमाणवेद्यः । रूपा-द्यभावान्न सोऽर्थः प्रत्यक्षगोचरः । अतस्तत्र कार्यकारणभावोऽपि न लोकतोऽवगन्तुं शक्यत इति तत्रानुमानं प्रवर्तमानमपि शास्त्रसिद्धं किंचित्कार्यकारणभावमवलम्ब्यैव प्रवृत्तं भवेत् । इतरथा त्वप्रयोजकं स्यात् । शास्त्रं च किं सामान्यतो देशकालविशेषाद्यनपेक्षं सर्वत्रा-

विशेषेणैवान्त्यजस्पर्शे दोषाभावं वदति विशेषतो वा । न तावदाद्यः कल्पोऽवकल्पते । तथाविधस्मृतिवचनस्य क्काप्यदर्शनात् । प्रत्युत

> 'चाण्डालं पतितं चैव दूरतः परिवर्जयेत् ।
> गोवालव्यनादर्वाक्सवासा जलमाविशेत्' ॥

इत्यङ्गिरःस्मृतिश्चाण्डालाद्यतिसांनिध्ये सचैलं स्नानं प्रतिपादयन्ती दोषमेव तत्र दृढीकरोति ।

अथ स्थलविशेषे दोषाभाव इति द्वितीयः कल्पो गृह्यत इति चेत्तत्रापि किं प्रमाणम् ।

> ' तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
> नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न विद्यते ' ॥

इति वचनं तत्र प्रमाणमिति चेदत्रोच्यते । 'स्पृष्टास्पृष्टिर्न विद्यते ' इत्यस्यायमर्थः । स्पृष्टं स्पर्शः । भावे क्तप्रत्ययः । अस्पृष्टिरस्पर्शः । स न विद्यत इति । ननु तत्र स्पर्श-स्तदभावश्च विद्यत एवेति न विद्यत इत्युक्तिरनुपपन्नेति चेत्सत्यम् । स्पर्शास्पर्शयोर्भेदो नास्तीत्येवं तत्तात्पर्याङ्गीकारात् ।

नन्वत्र स्पर्शोऽत्र चास्पर्श इत्येवं भेदेनापि तावुपलभ्येते एवेति चेन्न । कार्यतस्तयो-र्भेदो नास्तीत्यत्र तदुक्तेः पर्यवसानात् । स्पर्शस्य कार्यं स्नानपूर्वकशुचित्वापादनम् । अस्प-र्शस्य च न तत्कार्यमित्येवं यो भेदः स तीर्थादौ न विद्यत इति ।

ननु तीर्थादावपि जनसंमर्दाभावे सत्यस्पृश्यस्पर्शं परिवर्जयन्त्येव लोकाः । तीर्थादि-व्यतिरिक्तस्थले च शुभकर्मप्रवृत्तजनसंमर्दे सति तीर्थादाविवास्पृश्यस्पर्शविषये उदासते लोकास्तत्कथमिति चेन्न । तीर्थादिपदानां जनसंमर्दोपलक्षणत्वात् । तीर्थादिविशेषनिर्देश-स्तूदाहरणत्वेन कृतः । न तु तत्परिगणनमिति भ्रमितव्यम् । कथमेतदवगम्यत इति चेत्—शृणु । जनसंमर्दे सति तत्राज्ञानतः परम्परया वा अस्पृश्यस्पर्शोऽवर्जनीयो भवति । अतस्तादृशापदनुसारेण स्पृष्टास्पृष्टिर्न विद्यत इत्युक्तं स्मृतिकारैः । अत एव तीर्थादौ जनसंमर्दे सत्यपि यावच्छक्यमस्पृश्यस्पर्शपरिहारे प्रयतन्त एव जना इति संप्रदायः । नतु वचनबलात्कश्चनास्पृश्याश्लेषणे प्रवर्तते ।

अथ तादृशस्थले जायमानोऽस्पृश्यस्पर्शो दोषावहो भवति न वा । आद्ये स्पर्शस्य दोषावहत्वे शुचित्वापादनार्थं स्नानस्याऽऽवश्यकत्वेन स्पर्शास्पर्शयोः कार्यतो वैषम्यं दुर्निवारम् । अन्त्ये तत्र यावच्छक्यमस्पृश्यस्पर्शपरिहारे जायमाना लोकानां प्रवृत्ति-र्निर्बीजा स्यात् । किंच—

' चाण्डालं पतितं चैव दूरतः परिवर्जयेत् ' ।

इत्यङ्गिरःस्मृतौ प्रत्यवायापादकत्वेनोक्तश्चाण्डालादिस्पर्शः कथं स्थलविशेषे प्रत्यवायानापादकः स्यात् । अङ्गिरःस्मृतेः सामान्यमुखप्रवृत्तत्वात् । न चाङ्गिरःस्मृत्यपवादभूतं 'तीर्थे विवाहे' इति विशेषवचनमेव तत्र स्थलविशेषे प्रत्यवायाभावं बोधयतीति वाच्यम् । 'तीर्थे विवाहे' इति विशेषवचने स्पर्शदोषो न विद्यत इत्यनुक्तेः । तत्र हि स्पृष्टास्पृष्टिर्न विद्यत इत्येवोक्तं नतु स्पर्शदोषो न विद्यत इति ।

ननु पूर्वोक्तरीत्या फलतः साम्यप्रतिपादिका 'तीर्थे विवाहे' इति स्मृतिः प्रत्यवायसत्त्वे फलतो वैषम्यस्यावर्जनीयतयाऽनुपपन्नेत्यतस्तत्र तादृशस्मृतिवचनबलात्प्रत्यवायाभाव उन्नेयः । यथा—

' चाण्डालं पतितं चैव दूरतः परिवर्जयेत् ' ।

इति परिवर्जनोक्तिः कैमर्थक्यादनुपपन्नेत्यतस्तद्बलाच्चाण्डालादिस्पर्शे सति प्रत्यवाय उन्नीयते तद्वदिति चेत्- भ्रान्तोऽसि । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । यत्र दृष्टो हेतुः कश्चन प्रयोजकत्वेन नानुसंधीयते तत्रागत्या तत्प्रयोजकत्वेनादृष्टकल्पना कर्तव्या भवति । दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वात् । अत एव व्रीहीनवहन्तीत्यत्रावघातस्य तुषविमोक्षरूपदृष्टफलसत्त्वान्नादृष्टं कल्प्यते वाक्यार्थवेदिभिः । नियमजन्यादृष्टं तु तत्र भवत्येवेत्यन्यत् । प्रकृते च प्रत्यवायस्तदभावश्चादृष्टविशेष एव नतु लोकतोऽवगम्यमानः कश्चन घटतद्रूपादिरिव पदार्थविशेषः । तथा च

' चाण्डालं पतितं चैव दूरतः परिवर्जयेत् ' ।

इति परिवर्जनोक्तिः किमभिप्रायेति निरीक्षायां न लोकतः किंचित्तत्प्रयोजकत्वेनानुसंधीयत इत्यगत्या तत्र तदनुगुणः प्रत्यवायविशेषः प्रकल्पितव्यो भवति । 'तीर्थे विवाहे' 'स्पृष्टास्पृष्टिर्न विद्यते' इत्येवं स्पर्शास्पर्शयोः फलतो या भेदाभावोक्तिः सा किमभिप्रायेति सूक्ष्मेक्षिकायामेवमनुसंधीयते । यत्तीर्थादौ जनसंमर्दे सति तत्राज्ञानतो वा परम्परया वा कथमप्यस्पृश्यस्पर्शोऽवश्यंभावी स चावर्जनीयस्तथाच तत्र कथं गमनं स्यादित्यस्यामापदि समुपस्थितायां तत्रावश्यं गन्तव्यं चेद्गन्तव्यं स्पृष्टास्पृष्टिर्न विद्यत इति तादृशापदनुसारेणोक्तम् । तथा चाऽऽपत्परिहाररूपं लौकिकं हेतुमभिसंधाय प्रणीता स्मृतिरापत्परिहारेणोपक्षीणा कैमर्थक्याभावान्नादृष्टं प्रत्यवायाभावमुन्नेतुं क्षमा भवति ।

नन्वेवं प्रत्यवायाभावस्यानुन्नयने दोषनिर्हरणार्थे स्नानस्याऽऽवश्यकत्वेन कथं स्पर्शास्पर्शयोः कार्यतः साम्यमिति चेत्—उच्यते । साक्षात्स्पर्शे यावान्दोषो न तथा

परम्परया स्पर्शे । तथा ज्ञानतः स्पर्शे यावान्दोषो न तावानज्ञानतो जायमाने स्पर्शे । तथा हठात्कृतः स्पर्शो यादृशदोषावहो भवति न तादृशदोषावहो यदृच्छया स्वयं जायमानः । तथाच जनसंमर्देऽपि गुरुदोषावहस्पर्शे परिहाराय यावच्छक्यं प्रयत्यत एव जनैः । अज्ञानतो वा परम्परया वा यदृच्छया जायमानो यः स्वल्पदोषापादकः स्पर्शस्तद्विषय एव जनसंमर्दे जनानामौदासीन्यं तत्परिहाराय दृश्यते लोके । स्वल्पो दोषस्तु वातेनापि परिहृतो भवति । अतस्तत्रास्पृश्यस्पर्शो यथाकथंचिज्जायमानोऽपि अजातप्राय एव । अविशिष्टं वस्तु तावदजातकल्पमिति न्यायात् । एतदभिप्रायेणैव तत्र स्पृष्टास्पृष्टिर्न विद्यत इति स्मृतिकारैरुक्तम् ।

अपरमप्यत्र दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमनुसंधेयं भवति । तथाहि—

‘ चाण्डालं पतितं चैव दूरतः परिवर्जयेत् ’

इति स्मृतौ दोषविशेषोन्नयने यथा श्रुत्यनुग्रहो दृश्यते तथा ‘ तीर्थे विवाहे० ’ स्पृष्टास्पृष्टिर्न विद्यत इति स्मृतौ दोषाभावोन्नयने श्रुत्यनुग्रहो न दृश्यते । छान्दोग्ये पञ्चमाध्याय इत्थं पठ्यते—तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वा ( छा० ५ । १० । ७ ) इति । रमणीयचरणाः शोभनकर्माणः । अभ्याशः— अस्मिन्भूलोकेऽभ्यागन्तारः । अभ्याङ्पूर्वकाद्गत्यर्थकादशधातोः कर्तरि क्विबन्ताद्बहुवचनम् । कपूयचरणाः— निन्दितकर्माणः । कपूयां निन्दिताम् । अत्र शोभनकर्मणां प्राणिनां ब्राह्मणादियोनिप्राप्तिर्निन्दितकर्मणां च श्वादियोनिप्राप्तिः पतिपाद्यते । साध्वसाधुकर्मणी च सुखदुःखहेतुभूते । ब्राह्मणादियोन्यपेक्षया श्वादियोनिषु प्राणिभिर्दुःखाधिक्यमनुभूयत इति प्रसिद्धं लोके ।

ननु चण्डालयोनिं प्राप्तानां प्राणिनां ब्राह्मणाद्यपेक्षया दुःखाधिक्यं चाण्डालयोनिप्राप्तिनिमित्तं किमवलोक्यते । सुखदुःखोपभोगे मुख्यं साधनं हि शरीरम् । शरीरसंनिवेशविशेषो हि सर्वेषां मनुष्याणां समान एव ननु ब्राह्मणाद्यपेक्षया चाण्डालशरीरे काचिन्न्यूनता संदृश्यते । तथा च सुखदुःखप्रयोजका ये शब्दस्पर्शाद्युपभोगास्तत्सामर्थ्यं मनुष्येषु सर्वत्राविशिष्टम् । शब्दस्पर्शादिविषये तु न्यूनाधिकभावो वाऽनुकूलप्रतिकूलादिभावो वा तत्तद्व्यक्तिकृतपूर्वकर्मनिमित्तो ननु तत्र ब्राह्मणत्वादिजातिर्वा चण्डालत्वजातिर्वा तन्त्रम् । ब्राह्मणादिष्वपि केषांचिद्भूयांसि दुःखसाधनान्यल्पानि च सुखसाधनानि भवन्ति । तथा चण्डालेष्वपि केषांचिद्भूयांसि सुखसाधनानि अल्पानि च दुःखसाधनानि

भवन्ति । तथा च निन्दितकर्माचरणस्य चण्डालयोनिप्राप्तिफलं कथमत्र श्रुतौ निर्दिष्टमिति चेत्—उच्यते । प्राणिनां सुकृतफलभोगावस्थापेक्षया तत्साधनापेक्षा गरीयसी । भोगकाले पूर्वकर्मानुसारेण नियतो भोगः । साधनावस्थायां तु स्वाभीष्टैकानेकफलानुसारेण यथेच्छं वर्तनम् । किंच फलोपभोगकाले सर्वः प्रतिकूलशब्दस्पर्शादिविषयसंबन्धो दुःखत्वेन ज्ञायते । साधनावस्थायां तु न तथा । तत्र प्रसङ्गविशेषेण प्रतिकूलशब्दस्पर्शादिविषयसंबन्धोऽपि दुःखत्वेन न ज्ञायते । यथा तपस्विनस्तपश्चर्याकाले दुःखं न मन्यन्ते । इदमेव च तेषां क्लेशसहत्वं यद्दुःखसाधनीभूतानामपि पदार्थानां दुःखसाधनत्वेनाननुसंधानम् । अननुसंधानं च शरीराद्यभिमानशैथिल्यमूलकम् ।

इदं चापरमत्र बोध्यम् । मदीयत्वेनानुसंहिता येऽर्थास्तद्वियोगजं दुःखं न्यूनाधिकभावेन प्राणिभिः सर्वदैवानुभूयते । तत्र तादृशार्थवियोगानन्तरं जायमानं दुःखं वियोगजं भवत्येव । वियोगात्पूर्वं वियोगसंभावनया जायमानमपि वियोगजमेव । देहवियोगरूपमरणभीतिस्त्वापामरं प्रसिद्धैव । रोगाद्युपप्लवे सा भीतिः परिस्फुटा भवत्यन्यत्रापरिस्फुटेत्यन्यत् । नतु सा कदाचिदपि नास्तीति । निद्रावस्थामन्तरेण सर्वदैव तस्या विद्यमानत्वात् । निद्रावस्थायां तु सर्वथा शरीराद्यभिमानस्याभावेन तादृशशरीरवियोगसंभावनाया अप्यभावेन न लेशतोऽपि दुःखानुसंधानम् । इदं च दुःखाभावरूपं यत्सुखं तदनुसारेण सुखमहमस्वाप्समिति परामर्शो जाग्रदवस्थायां जनानाम् । निद्रासुखं चेदमुक्तरीत्या लेशतोऽपि दुःखेनाननुषक्तमित्यतो वैषयिकसुखं तस्माज्जघन्यमेव । अत एव वैषयिकं सुखमपि परित्यज्य निद्रासुखार्थं प्रयतन्ते लोकाः पामरा अपि । साधनावस्थायां च तपस्विनां देहाद्यभिमानशैथिल्येन तद्वियोगसंभावनादिजं दुःखमपि तदानीमनास्तिकल्पमिति तादृशदुःखाभावरूपं सुखं फलभोगावस्थापेक्षयाऽधिकं भवति । स्पष्टं चैतद्वेदान्तशास्त्रविदामिति विस्तरभीत्येह विरम्यते ।

या चैवं फलभोगावस्थापेक्षयाऽपि ज्यायसी साधनावस्था सा चाण्डालयोनौ नास्तीत्यतो निन्दितकर्माचरणफलत्वेन चाण्डलयोनिप्राप्तिरुक्तश्रुतौ वर्णितेति ब्राह्मणाद्यपेक्षया चण्डालानां दुःखाधिक्याभावेऽपि नोक्तश्रुत्यनुपपत्तिः । यथा लोके कश्चिदपराधी राजाधिकारिभिः कारागारे निरुध्यते न केवलं निरोधमात्रं किंतु स शारीरश्रमसाध्यमायासबहुलं कर्म कार्यते: कश्चित्त्वपराधविशेषेण केवलं निरुध्यत एव न त्वन्यत्कर्मकरणं किंचित् । किंतु निरोधमात्रेऽपि तदानीं स विरोधवशात्स्वोत्कर्षप्राप्तये स्वीयामवस्थां साक्षाल्लेखद्वारा वा स्वातन्त्र्येणाधिकारिभ्यो विज्ञापयितुं न प्रभवति तद्वत् । यथा वा कश्चिद्विद्यार्थी पाठशालायामध्ययनाय स्थितस्तस्यापराधविशेषमालोच्य निबन्धा गुर्वादिना नियम्यते यदेषमो वार्षिकपरीक्षायां नास्य प्रवेश इति । तेन च तस्य

स्योन्नतिसाधनीभूतवार्षिकपरीक्षायामनधिकारात्संवत्सरपर्यन्तं तूष्णीमवस्थानं भवति । तथा च यथा तस्येतरविद्यार्थिवत्परीक्षोपयोग्यभ्यासादिसाधनसाम्येऽपि नियन्तृवचनबला-द्यावत्संवत्सरमनधिकारस्तथा चण्डालस्य ब्राह्मणादिवद्यज्ञादिकर्मोपयोगिशरी-रेन्द्रियादिसाधनसाम्येऽपि श्रुतिबलाद्यावच्चण्डालदेहमनधिकारोऽवगम्यते । इत्थमनधि-कारे चण्डालतनूरयज्ञिया सिद्धा भवति । तत्संबन्धाच्च यज्ञियतन्वा अपि अयज्ञियत्वं स्यादतश्चण्डालतन्वा अस्पृश्यत्वं श्रुत्यभिप्रेतमित्यवगम्यते । अत्रार्थे बृहदारण्यकश्रुति-रप्यनुकूला भवति—'तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति' (बृ० १।३।१०) इति । अत्र शंकराचार्यभाष्यम्—देवतानां पाप्मानं मृत्युमपहत्य यत्र यस्मि-न्नासां प्राच्यादीनां दिशामन्तोऽवसानं तत्तत्र गमयांचकार । ननु नास्ति दिशामन्तः । कथं गमितवानिति । उच्यते । श्रौतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशां तद्वि-रोधिजनाध्युषित एव देशो दिशामन्तः । देशान्तोऽरण्यमिति यद्वदित्यदोषः । तत्तत्र गमयित्वाऽऽसां देवतानां पाप्मनः (द्वितीयाबहुवचनम्) विन्यदधाद्विविधं न्यग्भावेनाद-धात्स्थापितवती प्राणदेवता प्राणात्माभिमानशून्येष्वन्त्यजनेष्विति सामर्थ्यादिन्द्रियसंस-र्गजो हि स इति प्राण्याश्रयताऽवगम्यते । तस्मात्तमन्त्यं जनं नेयान्न गच्छेत्संभाषणदर्श-नादिभिर्न संसृजेत् । तत्संसर्गे पाप्मना संसर्गः कृतः स्यात्पाप्माश्रयो हि सः । तज्जन-निवासं चान्तं दिगन्तशब्दवाच्यं नेयात्....इत्थं जनसंसर्गे पाप्मानं मृत्युमन्ववायानीति । अनु—अव—अयानीत्यनुगच्छेयमित्येवं भीतो न जनमन्तं चेयादिति पूर्वेण सबन्ध इति । अत्र रामानुजभाष्य इत्थमुक्तम्—तस्मान्न जनमीति । यस्मात्कारणात्प्रत्यन्तदेशानां वागा-दिदेवताविनिर्मुक्तानृतादिलक्षणपापनिधानाश्रयतया म्लेच्छदेशत्वम् । अत एव तत्र जनं जननमुत्पत्तिमिति यावत् । अन्तं मरणं च नेयान्न प्राप्नुयात् । तत्र देश उत्पत्तिमरणे अशोभने इति यावत् । नेत्पाप्मानमिति । नेन्नैवेत्यर्थः । पाप्मानं मृत्युमन्ववायानि नानुगच्छेयमिति भीतः सन्नुत्पत्तिमरणे तत्र न प्राप्नुयात् । उत्पत्तिमरणे तादृशदेशे यथा न भवतस्तथा यतेतेति यावत् । इति ।

स्पर्शो ह्यवश्यं धर्मसंक्रमकारी भवति । धर्मसंक्रमश्च क्वचित्परिस्फुटः क्वचिदस्फुटः । तथा क्वचित्सद्यः क्वचिद्विलम्बेनेत्यन्यत् । धर्माश्च केचित्प्रत्यक्षविषया लौकिकाः । तेषां संक्रमोऽपि प्रत्यक्षो भवति । यथा जलेऽग्निसंबन्धादुष्णतावभासः पुष्पसंबन्धाच्च गन्ध-प्रतिभासः । केचिच्च धर्माः प्रत्यक्षाविषया अलौकिकाः सूक्ष्माः । तेषां संक्रमश्च प्रत्यक्षो न भवति । किंतु सूक्ष्मत्वात्तत्संक्रमः स्पर्शमात्रेण सद्य एव भवति । अतः स्मृतिकारैः—

'चण्डालं पतितं चैव दूरतः परिवर्जयेत्'

इत्यत्र दूरत इत्युक्तम् । एवं च यथा 'चण्डालं पतितं चैव दूरतः परिवर्जयेत्' इत्यत्र दोषोन्नयने श्रुत्यनुग्रहादिकं कारणं संदृश्यते न तथा 'तीर्थे विवाहे' इत्यत्र दोषाभावोन्नयने कारणं संदृश्यत इति चण्डालस्पर्शे स्पर्शतारतम्यानुसारेण गुरुर्वा स्वल्पो वा दोषोऽस्त्येवेति सिद्धम् ।

## ( लोकविद्विष्टाचारपरित्यागविचारः )

यत्तु कैश्चिदुक्तम्—यद्यपि श्रुतौ स्मृतिषु वा कश्चिदाचारोऽनुमतो दृष्टो वा तथाऽपि यदा स लोकानां विद्वेषपात्रं भवति तदा स तैस्त्यज्यते । तत्त्यागेन च ते शिष्टा नाधार्मिका भवन्ति । इममेवार्थं मनुयाज्ञवल्क्यौ स्पष्टमनुमन्येते—

'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥' ( मनुः ४ । १७६ )

'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु' ( याज्ञ० १ । ९ । १५६ )

इति चेति । तत्रेदं वक्तव्यम्—श्रुतौ येन सूक्ष्मेणालौकिकेनाभिप्रायेण किंचित्प्रतिपादितं तत्स्थूलदृश्वनां केवलबाह्यदृष्ट्या विद्वेषपात्रं भवति चेत्तदाऽपि न तादृशं परित्यज्यते यच्छ्रुतौ नित्यतयोक्तम् । तदकरणे प्रत्यवायोत्पत्त्या तस्याधार्मिकत्वप्रसङ्गात् । यच्च श्रुतौ केवलं प्रशंसार्थमुक्तं नतु तदकरणे प्रत्यवायः कश्चित्तत्त्यज्यते । तत्त्यागेनाधार्मिकत्वं तस्य नैव भवति । श्राद्धे मांसप्रदानं तु सांप्रतं लोकैः परित्यज्यते । यदा च पूर्वयुगे श्राद्धे मांसप्रदानसमाचार आसीत्तदा किं सर्वैरेव श्राद्धकर्तृभिर्नियमेन मांसं प्रदत्तमासीत् । असामर्थ्यादिना मांसाप्रदातारोऽपि तदानीं स्युरेव । मांसाप्रदानस्य दोषाजनकत्वात् । एतादृशं कर्म कालान्तरे बाह्यदृष्ट्या लोकैः परित्यज्यते चेदस्तु नाम । एतदभिप्रायेणैवोक्तमनुयाज्ञवल्क्यवचनसंगतिः कार्या । यच्च प्रत्यवायानुत्पत्तय आवश्यकत्वेन श्रुतावुक्तमनुमतं वा तस्यापि लोकविद्विष्टत्वे त्यागः कार्य इत्येवमुक्तमनुयाज्ञवल्क्यवचसोऽभिप्राय इति ये मन्यन्ते न तद्युक्तिसहम् । कोऽयं स्मृतिवचने भारातिशयः । यच्छ्रुतिविरुद्धमपि स्मृतिप्रामाण्यादुग्राह्यमिति । श्रुतिमूलकत्वेन च स्मृतीनां प्रामाण्यमिति भवताऽप्यङ्गीकृतमेव । एतादृशश्रुत्युक्तार्थपरित्यागेऽज्ञजनानामुपदेशः स्वमनोरथमात्रेण कर्तव्यत्वेनोक्तमनुयाज्ञवल्क्यवचनानां प्रमाणत्वेनोक्तिः साहसमेव । सर्वथा इदानींतनानां या

प्रवृत्तिर्यत्किंचिदर्थं संदिग्धं केवलबाह्यदृष्ट्या निर्णीय पश्चात्तादृशस्याभिमतस्यार्थस्य दृढी-करणाय स्मृतिवचनानां यथाकथंचिद्योजना कर्तव्येति । वास्तविकी मनुष्याणां प्रवृत्ति-स्त्वीदृशी अपेक्षिता भवति यत्स्मृतिवचनानां यः पूर्वापरसंदर्भसंगतः स्वारसिकश्चार्थ-स्तदनुसारेण संदिग्धार्थस्य निर्णयः कार्य इति ।

( नानाविधाशास्त्रीयाक्षेपनिरासः )

यदप्युक्तमनुयाज्ञवल्क्यवचनमवलम्ब्योक्तम्–'अत्रेदमवधानमर्हति । यन्मनुयाज्ञवल्क्यौ लोकविद्विष्टं, लोकविक्रुष्टं, इत्याहतुर्न पुनः शिष्टविक्रुष्टं, शास्त्रिविक्रुष्टं, धर्मज्ञविक्रुष्टमिति वा तेनेदं फलति यद्यदा यदा कश्चनाऽऽचारः शास्त्रानभिज्ञानामपि बहूनां जनानां वि-द्विष्टो भवति तदा सर्वैः शास्त्रज्ञैरपि त्याज्य एवेति, तत्तुच्छम् । अत्र परित्यजेन्नाऽऽचरे-दित्यत्रामुकेनेति कर्तृपरतया न कस्यचिदपि निर्देशो दृश्यते । केवलं लोकपदानुसारेण तत्र कर्ता कल्पनीयः । लोकपदं च शिष्टाशिष्टसाधारणबहुजनसमाजबोधकम् । शिष्टा अपि लोकान्तर्गता एव न तु लोकबहिर्भावस्तेषाम् । बहुजनसमाजबोधकलोकपदानुसाराच्च स्वल्पैरिति कर्तृपदं तत्र कल्पनीयं भवति । तथा च बहुभिर्यदङ्गीकृतं स्वल्पैस्तत्तथैवाङ्गीकर्त-व्यमित्यर्थः । अयमेवार्थः शिष्टाशिष्टविभागेन प्रतिपादनीयश्चेदित्थं प्रतिपादनीयः । बहुभिः शिष्टैर्यद्विद्विष्टं तत्स्वल्पैः शिष्टैरपि त्याज्यमेव । तथा बहुभिरज्ञैर्यद्विद्विष्टं तत्स्वल्पैरज्ञैस्त्याज्य-मेवेति । एवं चाशिष्टैरज्ञैर्बहुभिर्यद्विद्विष्टं तत्स्वल्पैः शिष्टैरपि त्याज्यमेवेत्यर्थोऽस्माद्वचनान्न लभ्यत इति स्पष्टमेव । कर्मपरित्यागश्चायं नात्यावश्यककर्मणः । यथा संध्योपासनादिकं नित्यतया विहितं कर्म । तत्र च शिष्टानां न विद्वेषो नापि विक्रोशः । यदि चाज्ञानां बहून-तत्र विद्वेषः स्यात्तदाऽपि न शिष्टैरल्पैरपि तत्परित्यज्यते । श्राद्धे मांसप्रदानादिकं तु न तथाऽत्यावश्यकम् । तद्यदि शिष्टा अपि केचित्केवलबाह्यदृष्ट्या परित्यजेयुस्तर्हि व्यव-हारानुरोधेन तत्परवशा इव ये स्वल्पाः शिष्टास्तैस्तत्परित्यागः कार्य इति । एतेनाग्रे यदुक्तम् ' तस्माद्यद्यपि शास्त्रेषु प्राचीनां परिस्थितिमनुसृत्य काश्चन मर्यादाः स्पृश्यास्पृ-श्यविचारे निबद्धास्तर्हि लोकानां तासु विद्वेषश्चेज्जातस्तदा ता मर्यादा भङ्गमेवार्हन्ति ' इति तदपास्तम् । अयं हि उक्तमनुयाज्ञवल्क्यवचनानिष्कृष्टोऽर्थ इत्येवं प्रतिपादितो दृश्यते । तत्रोक्तमनुयाज्ञवल्क्यवचनयोः कथं प्रवृत्तिः कश्च तयोः स्वारसिकोऽर्थ इति सर्वं समालोच्य कथमयं निष्कर्षस्तस्माल्लभ्यत इति सुधीभिरनभिनिविष्टबुद्धिभिर्विभावनीयम् ।

यदपि ' वेदेषु विहिता अनूदिता वा केचनाऽऽचाराः श्राद्धमांसान्नपाक–गवा-लम्भन–[illegible]विभाग–विधवानियोगप्रभृतयोऽधर्मत्वेन कलियुगादौ किल महात्म-भिर्निर्णीता इति पुराणेषु पठ्यते । सन्तु नाम ते महान्तः । किंतु श्रुतितो न तेषां गरीयस्त्वम् । इदं तावत्प्रतिप्रष्टव्याः केवलशास्त्राभिमानिनः–को नाम तेषां महात्मनाम-

धिकारः श्रुतिचोदितमप्यर्थजातमधर्मत्वेन निर्णेतुम् । केन वा दत्तः कदा कथं चेति । यदि कलियुगारम्भवर्तिनां जनानामधिकारः श्रुतिचोदितमनूदितं वाऽर्थं परित्यक्तुमासी-त्तर्हि केन हेतुनेदानींतनानामपि महात्मनां लोकविद्विष्टमर्थं त्यक्तुं नाधिकार इति महता वागाडम्बरेण घोष्यते ' इत्युक्तं तदतीवासंगतं प्रतिभाति । धूलिप्रक्षेपमात्रमेतदज्ञानानां चक्षुषि । वागाडम्बरमात्रमेवैतत् । न तत्र तत्त्वभूतोऽर्थः कश्चित् । यथाहि—श्राद्धमां-सान्नपाकादयः कलियुगादावधर्मत्वेन निर्णीता इति कथमवगतम् । आदित्यपुराणे—

' अयं कार्तयुगो धर्मो न कर्तव्यः कलौ युगे '

इति प्रकृत्य केषांचित्कर्मणामकर्तव्यत्वमुक्तं किल नत्वधर्मत्वम् । नह्यकर्तव्यत्वोक्त्या तेषामधर्मत्वं सिध्यति । निषिध्यमानस्य सर्वत्राधर्मत्वाभावात् । स एवाधर्मो भवति योऽनर्थहेतुः । नानुयाजेषु ये यजामहं करोति नातिरात्रे षोडशिनं गृह्णातीत्यत्र ये यजामहकरणे षोडशिग्रहणे च न लेशतोऽप्यनर्थावाप्तिः । नापि तयोरनुष्ठाने यजमान-स्याधर्मगामित्वव्यपदेशः । दीक्षितो न ददातीत्यत्र निषिध्यमानस्यापि दानस्यानुष्ठाने नानर्थावाप्तिरिति नाधर्मत्वं तस्य । तस्य निषेधस्य क्रत्वर्थतया क्रतुसाद्गुण्यं न स्यादिति त्वन्यत् । तथा च निषिध्यमानत्वस्याधर्मत्वव्याप्तत्वाभावात्कथं कलौ निषिद्धानामधर्मत्वं महात्मभिर्निर्णीतमिति त्वया गृहीतम् । कथं च श्रुतिमुपजीव्य प्रवृत्ता महात्मानः श्रुति-चोदितमर्थमधर्मत्वेनोपदिशेयुरिति सांप्रतम् । संध्यावन्दनाग्निहोत्रादिकं नित्यतया श्रुति-विहितं कर्मापि श्मशानादिकुदेशे चन्द्रसूर्योपरागमध्यरात्राद्यकाले वाऽशुभावस्थायां वा कर्तुं प्रवृत्तस्यात्र न कर्तव्यमिति य उपदिशति तेन किं श्रुतिविहितमग्निहोत्रादिकं कर्मा-धर्मत्वेन निर्णीतं भवति । किं पुनः श्रुत्यादिष्वावश्यकत्वेन यन्न विहितं किंतु प्राश-स्त्याभिप्रायेणोक्तं यदकरणेऽपि प्रत्यवायाभावश्च तथाविधस्य कर्मणो देशकालादिवि-शेषस्यायोग्यताभिप्रायेणाकर्तव्यत्वं ब्रुवता तस्याधर्मत्वं निर्णीतं स्यात् । तथा यज्ञे दीक्षि-तस्य यद्व्रतमुक्तं तत्कर्तुमसमर्थस्य यज्ञकर्मणि प्रवृत्तस्य कस्यचित्तस्य तादृशव्रताचरणा-सामर्थ्यं मनसा पर्यालोच्य यज्ञमिदानीं मा कार्षीरित्युक्तवान् हितैषी कश्चिच्छ्रुतिविहि-तस्य यज्ञस्याधर्मत्वं मन्यते किम् । प्रत्युत तस्यासामर्थ्यं जानन्नपि हितैषी मा कार्षीर्यज्ञमिति यदि तं नोपदिशेत्स व्रताननुष्ठानेन यज्ञवैगुण्ये यजमानस्य समर्थाचरणद्वारा प्रयोजकत्वेन प्रत्यवायी स्यात् । कलियुगादौ च महात्मभिर्यत्कलिवर्ज्यप्रकरणं पठितं तत्तत्र निषिध्यमानस्याधर्मत्वबुद्ध्या न पठितम् । कस्तर्हि तेषामभिप्राय इति चेदुच्यते । कलियुगे प्रायः सर्वे जना लोलजिह्वा अजितेन्द्रियाः कामपरवशाः । तत्र श्राद्धमांसाशने जिह्वालौल्यादन्यत्रापि

मांसाशने प्रवृत्ता भवेयुः। विधवानियोगे कामान्धा अन्यदाऽपि प्रवृत्ता भवेयुः। तथाच दुरदृष्टमवर्जनीयमिति तज्जन्यदुःखात्परित्रातुं महात्मभिः सौहार्देन श्राद्धमांसाशनादीनां वर्ज्यतोक्ता। एतच्च कलिवर्ज्यप्रकरणं समग्रमालोचयतां स्पष्टमेव। यतस्तत्प्रकरण एव—

'तथाऽधर्मसमावेशादन्यान्यपि कलौ युगे।
विहितान्यपि वर्ज्यानि कर्मभोगभयाद्बुधैः'॥

इत्युक्तम्। अन्ते च—

'एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः।
निवर्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः'॥

इत्युक्तम्। अत्र कर्मभोगभयादित्युक्त्या कामान्धानामविहितकर्मभोगे प्रवृत्तावधर्मसमावेशः स्यादिति स्पष्टमेवावगम्यते। तथा लोकगुप्त्यर्थमिति वदता कलिवर्ज्यप्रकरणं किमर्थं पठितं तदपि स्पष्टमेव प्रतीयते। एतेन कलियुगादौ महात्मभिः पठितं कलिवर्ज्यप्रकरणं पूर्वापरसंदर्भपूर्वकमनालोच्येदानींतनैः कैश्चित्स्वकपोलकल्पनया तेषां महात्मनां विपरीतं कंचनाभिप्रायं प्रदर्श्य यदि तेषां महात्मनां श्रुत्युक्तस्याधर्मत्वानिर्णयेऽधिकारस्तर्हीदानींतनानामस्माकमपि तथा स्यादिति यन्महता वागाडम्बरेणोक्तं तत्सुतरां निरस्तं वेदितव्यम्।

यत्तु "तदूर्ध्वं तत्समत्वेन पतितत्वात्प्रायश्चित्ताभावान्मरणम्' इत्ययं शूलपाणिवचनोपन्यासो न मे तुष्टिमावहति। न देवलस्मृतौ स्पष्टमुक्तं यद्वत्सरचतुष्टयादूर्ध्वं मरणमेव नान्या गतिर्विद्यत इति" इत्युक्तं तच्छूलपाण्यभिप्रायाज्ञानमूलकम्।

'संवत्सरैश्चतुर्भिश्च तद्भावमधिगच्छति'

इति हि देवलवचनम्। म्लेच्छसंसर्गिणो म्लेच्छान्नभक्षणादिदोषदुष्टा यावत्कालपर्यन्तं म्लेच्छभावं न प्राप्तास्तावत्प्रायश्चित्तेन पूता भवन्ति तद्भावमापन्नानां तु न प्रायश्चितम्। स च तद्भावः कदा प्राप्यते तदनेन देवलवचनेन प्रदर्श्यते। तथाच वर्षचतुष्टयानन्तरं प्रायश्चित्ताभावान्मृततुल्या एव ते भवन्तीति वचनतात्पर्यम्। तदेव च शूलपाणिना स्पष्टमुक्तमिति स्मृतिवचनविरुद्धमसंतोषकारकं शूलपाणिना किमुक्तमिति न विद्मः।

यत्पुनरुक्तम्—

"गृहीतो यो बलान्म्लेच्छैः पञ्च षट् सप्त वा समाः।
दशादिर्विंशतिं यावत्तस्य शुद्धिर्विधीयते॥

प्राजापत्यद्वयं तस्य शुद्धिरेषा विधीयते ।
अतः परं नास्ति शुद्धिः कृच्छ्रमेव सहोषिते ॥
म्लेच्छैः सहोषितो यस्तु पञ्चप्रभृतिविंशतिः ।
वर्षाणि शुद्धिरेषोक्ता तस्य चान्द्रायणद्वयम् ।

इत्येतानि देवलस्मृतिवाक्यानि विसंष्ठुलानीव दृश्यन्ते । कश्चन भागो भ्रष्ट इति प्रतिभाति " इति ।

तत्रेदं वक्तव्यम् । अत्र काश्चिद्भागो भ्रष्ट एवेति कथं ज्ञायते । सांप्रतमुपलब्धानुपूर्वीको हि पाठः सुयोज एव । नैवात्र काचिद्विसंष्ठुलता । तथाहि—अत्र विषयभेदेन प्रायश्चित्तद्वयमुक्तवचनत्रयेण प्रतिपाद्यते । तत्रैकं पादोनश्लोकद्वयेन । द्वितीयं च ततः परेण सपादश्लोकेन । बलान्म्लेच्छैर्गृहीतस्य पञ्च वर्षाण्यारभ्य विंशतिवर्षपर्यन्तं प्राजापत्यद्वयं प्रायश्चित्तमादावुक्त्वा ततः परं नास्ति शुद्धिरिति चोक्त्वा ततो यस्य वसतिरपि म्लेच्छैः सहाभूत्तस्य पूर्वापेक्षयाऽप्यधिकं प्रायश्चित्तं चान्द्रायणद्वयं तावत्येव काले विधीयते । अतः परं नास्ति शुद्धिरिति तु सममेव । सहवासस्य तादृशधीजनकत्वेन कामतोऽपि दोषसंभवात्प्रायश्चित्ताधिक्यम् । 'कृच्छ्रमेव सहोषिते' इत्यत्रैवकारेण सहवासिनो ब्राह्मणस्य न कदाऽपि कृच्छ्रान्न्यूनं प्रायश्चित्तमिति नियम्यते । अन्यत्र तु कृच्छ्रान्न्यूनमपि प्रायश्चित्तं दृश्यते—

' मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति ' इति यथा ।

सहवासिनो ब्राह्मणस्य कालाल्पत्वेऽपि कृच्छ्रमेव । सहवासे कामतोऽपि दोषसंभावनायाः सत्त्वात् । एवं सामञ्जस्येन देवलवचनयोजना भवति । न काचिदत्र विसंष्ठुलता । नापि कश्चन भागो भ्रष्ट एवेति कल्पनाया लेशतोऽप्यवसरः । एतेन " द्वावत्र विषयावुपन्यस्तौ—म्लेच्छैः सह पञ्चवर्षाण्यारभ्य विंशतिवर्षाणि यावत्संवासे जाते प्राजापत्यद्वयचान्द्रायणद्वयरूपमल्पप्रायश्चित्तं विहितमत्र । अपरं च बलान्म्लेच्छैः पञ्चप्रभृतिविंशतिवर्षाणि यावद्गृहीतस्यापि किंचित्प्रायश्चित्तं विधातुमुपक्रमः कृतः स तु न सम्यगुपसंहृतः । अत एतत्सिध्यति देवलमतानुसारेण विंशतिवर्षाणि यावत्प्रायश्चित्तं विधातुं शक्यं किंतु देवलस्मृतौ तत्कण्ठतो नोक्तम् " इत्युक्तमपास्तम् । वाक्यार्थयोजनान्यायापरिज्ञानात् । अत्र कौ द्वौ विषयावुपन्यस्तौ कथं च तयोः प्रायश्चित्तभेदः कथं चोपसंहारस्तत्सर्वमज्ञात्वैव यदुच्यते तत्कथं श्रद्धेयं स्यात् ।

अत्रेदमनुसंधेयम्—ब्राह्मणादीनां म्लेच्छसंसर्गेण यावन्म्लेच्छभावो न प्राप्तस्तावदेव प्रायश्चित्तविधानम् । म्लेच्छभावप्राप्तिश्च म्लेच्छत्वसमानाधिकरणधर्मैर्ब्राह्मणत्वादिजाती-

नामाच्छादनम् । तच्चाऽऽच्छादनमादौ धूमेन वह्नेरिव भवति । तत्र हि धूमोत्पत्तावपि वह्निस्वरूपं स्फुटं प्रकाशते । कालान्तरे ततोऽप्यधिकमाच्छादनं मलेनाऽऽदर्शस्येव । अत्र मले सति आदर्शस्वरूपं प्रकाशते किंत्वस्फुटम् । पुनः कालान्तरेण गर्भस्येवोल्बे-नाऽऽवरणं भवति । तत्र ह्यस्फुटोऽपि गर्भो लेशतोऽपि न विद्योतते केवलमस्तीत्येव । पुनः कालवशादाच्छादनातिशये विद्यमानाया अपि ब्राह्मणत्वादिजातेरस्तीत्यपि प्रतिभासो न भवति तदा म्लेच्छभावं गतानां तु प्रायश्चित्तं न विद्यते । यथावा नक्षत्रस्वरूपं विरले-नापि मेघेनाऽऽव्रियते । शुक्रादिज्योतिस्तु सान्द्रेन मेघेनाऽऽव्रियते । चन्द्रमास्तु सान्द्रतरेण । आदित्यश्च सान्द्रतमेन मेघेनाऽऽच्छादितो भवति तद्वत् । ईदृशी चावस्था ब्राह्मणस्य विंशतिवर्षैः प्राप्यते । ब्राह्मणत्वजातेरत्युज्ज्वलतया तस्याः पूर्वोक्तरीत्या सर्वांशेनाऽऽच्छादने तावतः कालस्याऽऽवश्यकत्वात् । शूद्रत्वजातेस्तु वर्षचतुष्टयमात्रेण तादृशमाच्छादनं भवति ।

' संवत्सरैश्चतुर्भिश्च तद्भावमधिगच्छति '

इति देवलवचनं च शूद्राभिप्रायकमेव । तत्र पूर्वं शूद्रस्यैवोपक्रमात् । एतदनुसारेण च क्षत्रियस्य म्लेच्छसंसर्गिणस्तद्भावप्राप्तिः पञ्चदशवर्षैर्भवति वैश्यस्य दशभिर्वर्षैरित्युन्ने-यम् । यथा यथा च म्लेच्छभावप्राप्तौ कालभूयस्त्वापेक्षा तथा तथा म्लेच्छभावप्राप्तेः पूर्वं कथ्यमानं प्रायश्चित्तमप्याधिकमेव भवति । दृढतरमलापसारणे प्रयत्नाधिक्यापेक्षा प्रसि-द्धैव । अत एवैतादृशस्थले विधीयमानं प्रायश्चित्तं साक्षादेवानुष्ठेयं नंतु प्रतिनिधिद्वारा । पात्रसंलग्नो दृढतरमलो हि निघर्षणेनैवापसृतो भवति । सर्वथा म्लेच्छभावप्राप्त्युत्तरं न कथमपि प्रायश्चित्तेन संशोधनं भवति । वचनबलान्मनसि प्रतीतोऽर्थोऽत्र लोकानां पुरतः प्रदर्शित इत्येव । न मया कश्चिदपि क्वचिदप्यनुष्ठेयविशेषे प्रेर्यते । अत्र कार्याकार्यवि-षये सुधियः स्वयं विचार्य कमप्यर्थं निश्चिन्वन्तु ।

यदुक्तम् ' देवलस्मृतौ वर्षचतुष्टयादूर्ध्वं प्रायश्चित्तं न विद्यत इति यदुक्तं तत्प्राय-श्चित्तगौरवज्ञापनार्थमेव । देवलरीत्या चान्द्रायणपराकचतुष्टययोरेव वत्सरचतुष्टये प्राप्तेः । द्वादशाब्दापेक्षयाऽधिकप्रायश्चित्ता(त्त)प्राप्तावेव मरणान्तप्रायाश्चित्तपर्यवसाने प्रायश्चित्ता-भावकथनोपपत्त्या प्रकृते च त्र्यब्दकृच्छ्रस्याप्यप्राप्त्या तद्वचनस्य निष्कृतिगौरवपरत्वे-नैव नेयत्वात् । तथाच बहुवत्सरातिक्रमेऽपि संसर्गलाघवगौरवं निश्चित्य अन्ततो गत्वा पापात्यन्तगौरवेऽपि आपस्तम्बोक्तं प्रायश्चित्तं विनिर्दिश्य पतितस्य समावेशने न शास्त्रं विरुणद्धीति निष्कर्ष इति ' ।

तदेतन्न मनोरमम् । वर्षचतुष्टयादूर्ध्वं प्रायश्चित्तं न विद्यत इत्युक्तेः प्रायश्चित्तगौरव-ज्ञापनार्थत्वं न संभवति । अन्यथानुपपत्तेरभावात् । यश्च तत्रोपोद्बलकतया युक्तिवादः प्रदर्शितः सोऽपि न युक्तः । संवत्सरपर्यन्तं प्रायश्चित्ताकरणे द्विगुणिता पापवृद्धिर्भवतीति तया रीत्या संवत्सरचतुष्टयपर्यन्तं तदकरण आहत्य चतुर्गुणा पापवृद्धिः स्यादतश्चान्द्रा-यणचतुष्टयप्राप्तिरिति त्वदभिमतम् । परंतु संवत्सरेण द्विगुणिता या पापवृद्धिर-भूत्तादृशस्य वर्धितस्य पापस्य द्वितीयवर्षसमाप्तौ द्विगुणिता वृद्धिरिति तदानीमेव मूलतश्चतुर्गुणा स्यात् । तदपेक्षया द्विगुणा तृतीयवर्षसमाप्ताविति तदानीं मूलतोऽ-ष्टगुणा स्यात् । एवं चतुर्थवर्षसमाप्तौ षोडशगुणेति कथं तदा चान्द्रायणचतुष्टयेन निर्वाहः स्यात् । कालाधिक्येन पापवृद्धिप्रकारश्चैतादृश एव युक्तः । तथाहि— द्विविधा वृद्धिः स्वरूपातिरिक्ता स्वरूपानतिरिक्ता च । यत्र वर्धितो भागो मूलस्वरूपात्पार्थ-क्येन दृश्यते तत्राऽऽद्या । यथा पञ्चकं शतमित्यत्र रूप्यकशतस्यर्णस्य वार्षिकी पञ्चरू-प्यकवृद्धिः । द्वितीया तु बदराम्रादिफलानाम् । बदराम्रादिविषये वर्धितस्यापि भागस्य स्वरूपानतिरिक्तत्वात्पुनर्वृद्धिर्भवत्येव । ऋणविषयेऽपि वार्षिकी वृद्धिः पुनर्मूलं प्रविष्टा चेत्तत्र वर्धितोऽपि भागः पुनर्वृद्धये प्रकल्पत एव यथासमयम् । तादृशसमयाभावे तु नेत्यन्यत् । सर्वथा वार्धितस्य भागस्य पुनर्वृद्धिप्रकल्पने स्वरूपानतिरिक्तत्वं बीजम् । प्राथमिकी बदराम्रादिफलानां वृद्धिस्तु नित्यं स्वरूपानतिरिक्तैव । पातकमपि बदराम्रा-दिफलवत्स्वभावत एव विवर्धते । प्रायश्चित्तेन तु पातकस्य दाहो भर्जनं वा । अकामतः कृतस्य दाहः कामतः कृतस्य तु भर्जनम् । भर्जनोत्तरं च न पातकस्य लेशतोऽपि वृद्धिर्नापि पूर्वावस्थापेक्षया मूलानि प्ररूढानि भवन्ति । किंच रोगविनाशकस्य रोगवृ-द्धिप्रतिबन्धकस्य चौषधस्य पथ्यमिव पापविनाशकस्य पापभर्जकस्य वा प्रायश्चित्तस्य मानसः पश्चात्तापो मुख्यः सहकारी । प्रायश्चित्तं च पातकज्ञाने सद्य एवानुष्ठेयं भवति। तत्र कालातिपातश्च प्रायश्चित्तचिकीर्षाया अभावाज्जायते । स च तच्चिकीर्षाया अभावः पश्चात्तापस्याभावात् । पश्चात्तापो हि कृतकर्मणि दोषदृष्ट्या जायत इति तादृशदोषदृष्ट्य-भावः पश्चात्तापाभावस्य कारणम् । दोषदृष्टिश्च कृतकर्मणि रागौत्कट्येन प्रतिबध्यते । सति च रागौत्कट्ये तादृशकर्मणि पुनः पुनः प्रवृत्तिरभ्यासपदवाच्या दुर्वारैव । मान-सिकी प्रवृत्तिस्तु तत्राव्यभिचारिण्येव । तथा च तत्र भूयसी पापवृद्धिरिति तादृशं वर्षचतुष्टयसंचितं गुरुपातकं कथं चान्द्रायणचतुष्टयेन निवर्तेत । अतो वर्षचतुष्टयादूर्ध्वं प्रायश्चित्तं न विद्यत इति देवलोक्तिर्वाच्यमर्यादयैव साधीयसीति बोध्यम् । एतेन बहु-वत्सरातिक्रमेऽपीत्यादि यदुक्तं तत्सुतरां निरस्तं वेदितव्यम् ।

यच्चोक्तं पतितपुत्रस्य प्रायश्चित्तं प्रक्रम्य ‘ तत् संव्यवहार्यतापादकं भविष्यति । अन्यप्रयोजनाभावात् ’ इति । तत्र पितृद्वारा संबद्धस्य पितृपातकस्य विनाशेन दुःखभोगाभावः स्वाश्रयकर्मण्यधिकारप्राप्तिश्चेति प्रयोजनसंभवो वर्तत इति तत्र तदसंभवे हेतुः प्रदर्शनीयः । यत्र हेतुप्रदर्शनमावश्यकं तत्र निर्हेतुकोक्तिर्न विश्वसनीया भवति । पतितपुत्रस्य प्रायश्चित्तेऽपि संव्यवहार्यता न भवतीत्यस्माकं नाऽऽग्रहः । किंतु तत्रान्यप्रयोजनाभावादिति हेतुरसंगतः ।

यदुक्तम् “ पित्रादिपरम्परया पातित्येऽपि पतितप्रायश्चित्तं चरित्वा पितृतो मातृतो वा संकराभावे भवति पतितसंततेः पूर्वतनजातिसंप्रवेशः ” इति ।

तत्र पतितसंततिः कियत्पुरुषपर्यन्तेत्यवधेरप्रदर्शनान्न्यूनता । तत्रावधिरविवक्षित एवेति चेन्न । प्रायश्चित्तं हि पित्रादिपरम्परयाऽनुवृत्ताया ब्राह्मणत्वादिजातेरुद्दीपकं नतु लेशतोऽप्यविद्यमानाया उत्पादकम् । जातेरनुवृत्तिश्चाऽऽहत्य चतुर्थपुरुषपर्यन्ता स्यात् । नतु पञ्चमे लेशतोऽपि । इति निरूपितं पूर्वमेव ।

यच्च पुनरग्रे “ येषां तु पितृतो मातृतो वा संकर एव मतान्तरप्रवेशानन्तरं समभूत्तेऽपि सनातनधर्मेऽधिक्रियन्ते । तेषां च शैववैष्णवादिदीक्षाद्वारा भवति सनातनधर्मप्राप्तिः ” इत्युक्तम् ।

तन्न । सनातनधर्मप्राप्तौ हि तादृशदीक्षाधिकारो दीक्षया च सनातनधर्मप्राप्तिरित्यन्योन्याश्रयात् । दीक्षाविधिर्हि योग्यताबलात्सनातनधर्मीयोद्देश्यको नतु सनातनधर्मप्रापकः । किंच सनातनधर्मीयत्वव्याप्या ब्राह्मणत्वादिजातयः । तथाच सनातनधर्मीयत्वप्राप्तौ तद्विशेषभूता ब्राह्मणत्वाद्यन्यतमा काचिज्जातिरवश्यं वक्तव्या । निर्विशेषं न सामान्यमिति न्यायात् । संकरश्च द्विधा । माता पतितवंशीया पिता ब्राह्मणाद्यन्यतम इत्येकः । पिता पतितवंशीयो माता च ब्राह्मणाद्यन्यतमा इत्यपरः । आद्ये मातृजातिरनुलोमसंकरसत्त्वात् । मातुश्च पतितवंशीयत्वान्न काचिद्विशेषभूता जातिर्वक्तुं शक्यते । द्वितीयस्तु विलोमसंकर एवेति तत्रापि न विशेषभूता काचिज्जातिः । चाण्डालत्वसदृशी विलक्षणैव काचित्स्वतन्त्रा जातिः कल्प्यत इति चेदस्तु नाम । किंतु सा प्रकल्पिता जातिः सनातनधर्मीयत्वव्याप्या न वा । व्याप्या चेत्साऽऽनुवंशिक्येव प्राप्नोति तत्सामान्यं सनातनधर्मीयत्वमपि तथैव प्राप्तं भवति । निःसामान्यस्य विशेषस्याभावात् । तथाच तत्र दीक्षया किं कृतं स्यात् । अथ सा स्वतन्त्रत्वेन प्रकल्पिता विल-

क्षणा जातिः सनातनधर्मीयत्वव्याप्या न स्वी क्रियते चेन्निर्विशेषं न सामान्यमिति न्यायविरोधस्तदवस्थ एव भवति । अथायं संकरः सनातनधर्मीयेतरेणेति चेत्तादृशसंकरजस्य सनातनधर्मीयत्वप्राप्तये दीक्षाविधिरिति चेद्दीक्षाविधेस्तत्प्रापकत्वं न केनापि वचनेन बोधितामिति तत्प्राप्तिर्दुर्लभैव भवति ।

यच्चाग्रे ' येषां पुनर्द्विजानां बहुपरम्परया नोपनयनादिसंस्कारस्तेषामपि सावित्रीपतितानां श्रौतसूत्रोक्तव्रात्यस्तोममिष्ट्वा संभवति द्विजातिकर्माधिकारः । व्रात्यत्वस्यैव तत्राधिकारितावच्छेदकत्वात्संकोचे प्रमाणाभावात् ' इत्युक्तम् ।

तच्चिन्त्यम् । द्विजत्वसंबन्धे सति यथाविध्युपदेशप्राप्तसावित्र्यभाववत्त्वं हि व्रात्यत्वम् । सावित्र्यभावश्च यथाविध्युपदेशाभावादुपदिष्टाया अधारणाद्वा । सत्यन्तेन शूद्रम्लेच्छादिव्युदासः । तेन तेषां प्रायश्चित्तेनापि न द्विजातिकर्माधिकारः । पतितसंततौ चाऽऽहत्य चतुर्थपुरुषपर्यन्तमेव द्विजत्वसंबन्धो नतु लेशतोऽपि पञ्चम इति पञ्चमादयो न व्रात्यपदाभिधेया भवन्ति । तथाच बहुपरम्परयेत्युक्तिर्न संभवति ।

ननु शूद्रम्लेच्छाद्यर्थं सत्यन्तविशेषणस्याऽऽवश्यकत्वेऽपि तत्र किं प्रमाणम् । व्रात्यशब्दविवेचनं च सावित्रीपतिता व्रात्या इत्येवं संदृश्यते । तेन च विशेष्यदलस्य संग्रहो भवति नतु विशेषणदलस्येति चेन्न । विशेषणदलस्यापि सावित्रीपतिता इत्यनेनैव संग्रहात् । सावित्रीपतिता इत्यस्य सावित्रीरहिता इत्यर्थः । तत्र संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वादवत्सा धेनुरानीयतामित्यत्रेव संभावितसावित्रीका एवोपस्थिता भवन्ति । सावित्रीसंभावना च द्विजत्वसंबन्धे सत्येव । द्विजत्वस्यैव सावित्रीयोग्यतावच्छेदकत्वात् । तथाच विशेषणदलमपि सिद्धं भवति ।

यदपि ' अन्त्यजाद्यपेक्षयाऽपि जात्या कर्मणा वा जघन्यानां म्लेच्छानां संस्पर्शो यदि न परिह्रियते तर्हि किमन्त्यजस्पर्शद्वेषेण ' इत्युक्तम् ।

तदसंगतम् । बाधेऽदृढेऽन्यसाम्यात्किं दृढेऽन्यदपि बाध्यतामिति न्यायात् । तथाच म्लेच्छस्पर्शदृष्टान्तो विफल एव । अन्त्यजस्पर्शद्वेषेणेत्युक्तिरप्यसंगता । अन्त्यजविषयकद्वेषेणान्त्यजस्पर्शः परिह्रियत इति त्वदभिमतम् । परंतु सनातनधर्मीयाणामन्त्यजद्वेषस्य न किंचिदपि कारणं कार्यं च संदृश्यते । द्वेषस्य कारणं हि तत्कृतापराधादिकम् । नहि कश्चिदन्त्यजैः सामष्ट्येन सनातनधर्मीयाणामपराधः कृतोऽस्ति । नापि कार्यं हननोद्यमादिकं दृश्यते । स्पर्शपरिहारस्तु न द्वेषकार्यम् । शास्त्रप्रतिपादिततत्स्पर्शनिषेधोल्लङ्घनजप्रत्यवायभीत्या हि स्पर्शः परिह्रियते सनातनधर्मीयैर्न द्वेषेण । यदि कश्चिदन्त्यजः पङ्के निमग्नो भवेद्रोगेण वा पीडितो भवेत्तदा तं स्पृष्ट्वाऽपि तदुद्धाराय

प्रयतन्त एव सनातनधर्मीया अपि स्पर्शदोषः स्नानेन परिहृतो भविष्यतीत्यनुसंदधानाः। यथा च रजस्वलास्पर्शो न रजस्वलायां द्वेषेण परिह्रियते तद्वदेवात्र बोध्यम् ।

यच्च तदुत्तरम् ' सर्वजनीनसभास्थानदेवालयजलाशयादौ तु स्पर्शदोषापवादकानि शास्त्रवचनान्येवोपलभ्यन्ते । यथा अत्रिः—

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ' ॥

इत्युक्तं तदपि चिन्त्यम् । नह्येभिर्वचनैः सामान्यतः प्राप्तः स्पर्शदोषोऽपोद्यते । देवयात्रादिस्थलविशेषनिर्देशात् । प्रत्युत स्थलविशेषनिर्देशेन सामान्यतः प्राप्तोऽन्त्यजादि-स्पर्शदोषो दृढी क्रियते । प्रतियोगिप्रमितिं विना निषेधानुपपत्तेः । किंचैदृशानां वचनानां देवयात्रादिस्थलविशेषेऽप्यन्त्यजादिस्पर्शदोषो नास्तीत्यत्र न तात्पर्यं किंतु विद्यमानोऽपि दोषः स्वल्पप्रायश्चित्तनिरसनीयो भवतीत्यर्थ एवेति प्राङ्निरूपितमेव ।

यत्तु—अस्पृश्यानां देवालयादौ सभामण्डपे प्रवेशे न किंचिद्बाधकम् । केवलं तैरन्तर्गर्भ-गृहे देवसमीपे न प्रवेष्टव्यमिति केचिद्वदन्ति । तत्रेत्थं विचार्यते । यदि कश्चित्पुराण-मताभिमानी स्नातः शुचिः पूजासंभारं गृहीत्वा सभामण्डपादन्तः प्रविविक्षुरस्पृश्येन स्पृष्टश्चेत्तेन तथैवान्तर्गत्वा पूजा कार्येति नेति । यदि तथैव पूजा कार्येत्युच्यते तर्हि, अस्पृश्येनाप्यन्तर्गत्वा पूजा कुतो न कार्या भवति । यदि न कार्येत्युच्यते तर्ह्यस्पृश्य-स्पर्शः कियताऽप्यंशेन दूषकत्वेनाभिमत इति गम्यते ।

यच्च व्यवहारं दृष्ट्वा तदनुसारेण शास्त्रार्थो निर्णेय इत्युच्यते तद्भ्रान्तिविलसितम् । व्यवहारदर्शनं हि न शास्त्रार्थनिर्णय उपयुज्यते । शास्त्रार्थो हि व्याकरणकोशाद्यनुसारे-णोपक्रमादिषड्विधलिङ्गैस्तात्पर्यावधारणेन मीमांसापरिकल्पितन्यायानुसारेण च निर्णेयो भवति । व्यवहारदर्शनं निर्णीतशास्त्रार्थानुसारेणानुष्ठाने कर्तव्य उपयुज्यतां नाम । वस्तु-तस्तु तत्रापि तस्य नोपयोगः। अनुष्ठानं हि व्यवहारदर्शनाधीनं शास्त्रार्थाधीनं वा । आद्ये शास्त्रानर्थक्यम् । अन्त्ये व्यवहारदर्शनस्य कथमुपयोगः । उभयाधीनं चेद्यत्रो-भयोर्वैमत्यं तत्र कस्य प्राबल्यम् । शास्त्रस्य चेद्व्यवहारदर्शनस्य नोपयोग इति तदवस्थ-मेव । व्यवहारदर्शनस्य प्राबल्यं चेत्तत्र हेतुं न पश्यामः । शास्त्रबाधेन व्यवहारसिद्धिस्त-त्सिद्धौ शास्त्रबाध इत्यन्योन्याश्रयश्च । क्व तर्हि व्यवहारदर्शनस्योपयोगः । उच्यते—

सौकर्यं व्यवहारो वा विकल्प उपयुज्यते ।
नित्ये विधौ निषेधे च न पुरस्कारमर्हति ॥ इति ।

किंच शास्त्रज्ञानामनुष्ठानकाले क्वचित्संशये शास्त्रज्ञव्यवहारदर्शनं तत्रोपयुज्यते । तथा च व्यवहारदर्शनं न शास्त्रप्रणयनेनापि तदर्थनिर्णय उपयुज्यते । अनुष्ठानकाल एव च क्वचिदुपयुज्यत इति तत्त्वम् ।

यच्च 'सर्वथा तु सामाजिककुशलविचारपरामर्शेनैव धर्माधर्मविचिकित्साऽऽरब्धव्या न केवलं वचनबलेन । लोकसंग्रहविरोधात् । लोकानुग्रहार्थं च शास्त्रप्रवृत्तिरिति । तथा च महाभारतम्—

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।
द्वितीयं धर्मशास्त्रं तु तृतीयो लोकसंग्रहः' ॥

इत्युक्तम् । तत्रेत्थं विचार्यते । वचनबलाद्धर्मत्वेन प्रतीयमानो योऽर्थः स एव धर्मः । तस्मात्सामाजिककुशलं न भवति चेन्मा भून्नाम । न तेन धर्मस्वरूपं विपर्यस्यत इत्येवं यो विचारः स केवलवचनबलाज्जायमान इत्युच्यते । तादृशे तु विचारे जना अकुशलभीत्या धर्मं न स्वीकुर्युरित्यतो लोकसंग्रहो न स्यात् । अतो लोकसंग्रहविरोधात्केवलवचनबलेन धर्मनिर्णयो न कर्तव्य इति हि त्वदभिमतम् । तत्र केवलं वचनबलेन धर्माधर्मविचिकित्सा नैव संभवति । यतो वचनकर्तृभिरेव स्मृतिकारैर्मन्वादिभिः सामाजिककुशलविचारपरामर्शेनैव धर्माधर्मनिर्णायिकाः स्मृतयः प्रणीताः । किंतु तैरैहिकमामुष्मिकं चेति द्विविधमपि कुशलं परामृष्टम् । नतु केवलमैहिकमेकमेव । इयं हि तेषां पद्धतिः सुखाधिक्यप्राप्तये स्वल्पसुखत्यागः कर्तव्यस्तथा स्वल्पदुःखं च तदर्थमेव सोढव्यम् । दुःखाधिक्यपरिहारायापि इदं द्वयमावश्यकमेव । आधुनिका अपि प्रायः सुखाधिक्यप्राप्तिं दुःखाधिक्यपरिहारं चानुसंधायैव प्रवर्तन्ते । किंतु केचित् कदाचिदामुष्मिकं सुखाधिक्यं दुःखाधिक्यं च नानुसंदधते । किंतु केवलमैहिकमेव । यथा बाला अज्ञानिनो विद्यार्जनप्रयुक्तं भाविसुखं विद्यानर्जनप्रयुक्तं भावि दुःखं चैहिकमपि बाल्यादज्ञात्वा तात्कालिकाल्पसुखलिप्सया क्रीडासक्ता भवन्ति तद्वत् । तथा चैहिकपारलौकिकेति द्विविधसुखदुःखदृष्ट्यैव धर्माधर्मविचारः कर्तव्यो भवति । तथैव च स्मृतिकारैः कृतः । तथैव च जायमानं सामाजिकं कुशलं सत्यमितरत्तु कुशलाभासः । तथा च केवलवचनबलाद्धर्मनिर्णयो नास्त्येव । अन्तर्गतकुशलस्य सर्वत्रावर्जनीयत्वात् । अथ पारलौकिकं सुखं दुःखपरिहारश्च दूरतरे कस्तत्र श्रद्दधाति । अस्माकं त्वैहिकं सुखं दुःखपरिहारश्चेष्यते । इत्येवं येषां मतिस्तेषां लोकानां संग्रहाय पारलौकिके सुखे दुःखपरिहारे चौदासीन्यमालम्ब्यैहिकसुखप्राप्तिदुःखपरिहारमात्रमालक्ष्य स्मृतिवचनैर्धर्मनिर्णयः कार्यः । तथा सत्येव निरुक्तमतीनां लोकानां संग्रहो भवेत् । यतो लोकसंग्रहार्थं शास्त्रस्य प्रवृत्तिः । एतद्विपरीतस्तु धर्मनिर्णयः केवलवचनबलाज्जायमान इत्युच्यते तादृशो न कार्यः । तथा सति उक्तमतीनां लोकानां संग्रहो न स्यादित्यभिप्रायश्चेन्मूल एव कुठारपातः । लोकसंग्रहार्थं शास्त्रप्रवृत्तिरिति सत्यम् । किंतु तत्र लोकपदेन नोक्तविधानां नास्तिकानां ग्रहणम् । लोकसंग्रहार्थं या शास्त्रस्य प्रवृत्तिः सा धर्माधर्मस्वरूपप्रकाशनद्वारैव । धर्माधर्मौ चादृष्टावेवेति तत्स्वरूपाजिज्ञासा नास्तिकानां नैव संभवतीति कथं तादृशलोकसंग्रहार्थं शास्त्रं प्रवर्तेत । किंच लोकसंग्रह इत्यत्र संग्रहश-

च्छेदेन समावेश उच्यते । समावेशश्च बहिष्ठस्य जनसमाजमध्ये प्रवेशः । प्रवेशश्च नैकत्राऽऽसनभोजनादिनैव । तादृशो भवतु मा वा भूत् । किं तु बहिष्ठत्वनिवृत्त्या समाजान्तर्गतत्वम् । यथेतरेषां समाजघटकानामुत्तरोत्तरोत्कर्षप्राप्तिद्वारं पिहितं न भवति तथैवास्य जायते चेत्स तदन्तर्गत इत्युच्यते । तादृशप्राप्तिद्वारं च कर्मैव । तद्रूपं द्वारं च कर्मण्यनधिकारे सति पिहितमित्युच्यते । शास्त्रेण तु प्रायश्चित्तज्ञापनद्वारा तादृशकर्मण्यधिकारो बोध्यते । एतादृशश्च तेषां लोकानां संग्रहः शास्त्रेण द्वारमोचनद्वारा क्रियते । नास्तिकानां चैतादृशकर्मचिकीर्षाया एवाभावेन न तत्राधिकारानधिकारचर्चाया अवसरः । अतश्चाऽऽस्तिकानुद्दिश्यैव शास्त्रप्रवृत्तिरिति बोध्यम् ।

यच्चाग्रे तदुपष्टम्भकतया धर्मं जिज्ञासमानानामित्यादि महाभारतवचनमुपन्यस्तं तदप्यसंगतम् । इत्थं हि तदीयास्तदाशयं कल्पयन्ति । उक्ते भारतवचने लोकसंग्रहो धर्मे प्रमाणत्वेनोपन्यस्तः । अतो लोकसंग्रहो यथा स्यात्तथा धर्मस्वरूपं निर्णेयं भवति । स्मृतिवचनान्यपि तदनुसारेणैव योज्यानि । यथा सामाजिकं कुशलं समाजदार्ढ्याधीनम् । दार्ढ्यं च समाजभूयस्त्वाधीनम् । तदर्थं तत्राधिकलोकसंग्रह आवश्यकः । तदर्थं च तत्र चाण्डालादीनामस्पृश्यत्वेनाभिमतानामपि समाजे संग्रह आवश्यकः । अमुं लोकसंग्रहमुक्तभारतवचनेन प्रमाणीकृत्य धर्मस्वरूपं निर्णेयमिति चाण्डालादिस्पर्शो नाधर्म इति सिध्यति । एतदनुसारेण धर्माधर्मप्रतिपादकानि स्मृतिवचनानि योज्यानीत्यतः ‘ स्पृष्टास्पृष्टिर्न विद्यते ’ इति वचने देवयात्रादि स्थलविशेषनिर्देशो नतु परिगणनमिति स्वीकार्यं सर्वत्रैव चाण्डालादिस्पर्शदोषो नास्ति । तथा च देवयात्राविवाहेष्वित्यादिवचनानि विशेषमुखप्रवृत्तान्यपि सामान्यमुखप्रवृत्तानि कल्पनीयानि । तथा चाण्डालादिस्पर्शनिषेधकानि वचनानि तु सामान्यमुखप्रवृत्तान्यपि ‘ वैधकर्मकाले ’ इत्यध्याहृत्य विशेषमुखप्रवृत्तानि भवन्तु । तथा चोत्सर्गापवादभावो विपरीतः कल्पनीय इति । अत्रोच्यते । यदिदमुक्तविधलोकसंग्रहानुरोधेन स्मृतिवचनानामर्थान्तरं प्रकल्पितं तत्स्मृतिकाराभिप्रेतं न वा । नाऽऽद्यः । तथाविधोपक्रमादिलिङ्गाभावात् । न द्वितीयः । वक्त्रनभिप्रेतार्थप्रकल्पनस्य वाक्यार्थवेदिभिस्तिरस्कारात् । किंच किमर्थमिदमर्थान्तरप्रकल्पनम् । स्मृतिप्रामाण्यसंरक्षणाय चेत्किमीदृशेन प्रामाण्यसंरक्षणेन श्रद्धालुजनवञ्चनाहेतुभूतेन । तदपेक्षया स्मृतेरप्रामाण्योक्तिरप्येकया विधया ज्यायसी स्यात् । किं चैवं स्मृतिकारानभिप्रेतस्यार्थस्याध्याहारलक्षणाद्याश्रित्य प्रकल्पने त्वदुक्त एवार्थो ग्राह्य इति नियमाभावाद्यस्मै यस्मै यद्रोचते स तत्प्रकल्पयेत् । कश्चिदहरहः संध्यामुपासीतेत्यस्य नञर्थाध्याहारं प्रकल्प्य निषेधे तात्पर्यं प्रकल्पयेत् । कश्चिद्व्यसनी ग्रामवासी न सुरां पिबेदित्यत्र ‘ वने ’ इत्यध्याहारं ब्रूयात् । कश्चिच्च तथाविधो वननिवासी ‘ ग्रामे ’ इत्यध्याहारं ब्रूयादिति बहु व्याकुली स्यात् । किंच भारतवचने नेदृशो लोकसंग्रहो विवक्षितः । तत्र हि धर्मे प्रमाणत्वेन लोकसंग्रह उपन्यस्तः । प्रमाणं च प्रमाकरणं धर्मयथार्थस्वरूपज्ञान-

साधनम्। उक्तविधो लोकसंग्रहस्तु न धर्मप्रमायाः करणम्। करणस्य कार्यप्राग्भावनियमात्। किंतु धर्मप्रमायाः फलम्। चाण्डालादिस्पर्शो नाधर्म इत्येवं ज्ञानं यथार्थत्वेन गृहीतं चेत्तदुत्तरं तेषां संग्रहे लोकाः प्रवर्तेरन्। नतु ततः प्राक्। कस्तर्ह्युक्तभारतवचने लोकसंग्रहशब्दार्थ इति चेद्भारत एवान्यत्र भीष्मपर्वणि गीतायामर्जुनस्य युद्धाभिमुख्यं संपादयता भगवता 'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि' इत्यादिना यादृशः कटाक्षीकृतः। तत्फलं च तत्रैव—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥

इत्येवं प्रदर्शितम्। अयं भावः। अयं धर्मोऽथाधर्म इति संशये श्रुतिप्रमाणेन धर्मस्वरूपं ज्ञायते। इदं च धर्मज्ञापने मुख्यं प्रमाणम्। अग्रिमप्रमाणोपजीव्यत्वात्। अत इदं श्रुतिरूपं प्रमाणं परमं प्रथमं चोच्यते। भारते च क्वचित्परममित्यत्र प्रथममिति पाठः। युक्तश्च स पाठः। अग्रे द्वितीयतृतीयशब्दोल्लेखनेन तदानुगुण्याय प्रथमशब्दोल्लेखस्य सामञ्जस्यात्। श्रुत्यर्थं ज्ञातुमशक्नुवतां द्वितीयं प्रमाणं मन्वादिशास्त्रम्। शास्त्रज्ञा जनाः स्वल्पा एव। तदपेक्षयाऽपि श्रुत्यर्थवेत्तारः स्वल्पतराः। प्रायः सर्वो लोक इदानीं सदाचारेण धर्मं जिज्ञासते। तथा चेदं सदाचाररूपं प्रमाणं पूर्वप्रमाणमुपजीव्य प्रवृत्तमपि तदपेक्षया व्यापकम्। प्रमाणपरिगणने श्रुतिः स्मृतिः सदाचार इति तृतीयप्रमाणत्वेन सदाचारो निर्दिश्यते। प्रमाणप्रतिपादकोक्तभारतवचनेऽपि च लोकसंग्रहस्य तृतीयप्रमाणत्वेन निर्देशात्पूर्वप्रमाणद्वयसाहचर्याच्च सदाचार एव लोकसंग्रहशब्देनोच्यते। लोकान्संगृह्णातीति लोकसंग्रह इति कर्तृव्युत्पत्तेः। लोकाः संगृह्यन्तेऽनेनेति करणेऽप्प्रत्ययो वा। तथा च भारतवचने न त्वदुक्तो लोकसंग्रहोऽभिप्रेत इति सिद्धम्।

यच्च तदग्रे लोकसंग्रहशास्त्रयोः समन्वयं कृत्वा शास्त्रानुशासने न शास्त्रप्रामाण्यं विप्लवेत नवा समाजसेतुरुच्छिद्येत इत्युक्तं तदप्यसंगतमेव। स्मृतिकारानभिप्रेतार्थकल्पनया वचनयोजनायां प्रामाण्यविप्लवः स्मृतिबद्धसेतोरुच्छेदश्च भवत्येव। तदुक्तं वात्स्यायनभाष्ये—सिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरनुज्ञा प्रतिषेधो वा न च्छन्दतः (गौ०सू०भाष्य १-२।१४) इति। अत एव—

शस्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः।
तदेव शस्त्रं कृतवान् पितुराज्ञा न लङ्घिता॥

इत्यत्र नखलावकशस्त्रकर्तुः पुत्रस्य वस्तुतः पित्राज्ञोल्लङ्घनदोषोऽस्त्येवेति मन्यन्तेऽभियुक्ताः। एतच्च सर्वं सुधियो विभावयन्त्विति शम्।

(द्विविधलक्षणायां तिथावदृष्टविशेषाधायके कर्मणि का ग्राह्येति विचारः)

धर्मस्वरूपमदृष्टं विहितकर्मजन्यमिति प्रागेवाभिहितम्। कर्म च तत्तदुचितकाले

जायमानमेव कात्स्न्येंनादृष्टं जनयति नान्यथा । कालश्च कर्मणो यस्य यः कालस्तत्काल-व्यापिनी तिथिरित्युक्तः । तिथेश्च दिनद्वये कर्मकालव्यापित्वेऽव्यापित्वे वा युग्मवाक्य-विशेषवचनादिभिर्निर्णयो निबन्धग्रन्थेष्वभिहित एव। किं तु तिथिस्वरूपं द्विविधं दृश्यत इति किंविधमत्र ग्राह्यमिति संशयः ।

अत्र वदन्ति । तिथेर्लक्षणं द्विविधमन्तरलक्षणं कलालक्षणं च । सूर्यचन्द्रयोर्द्वादशांशमन्तरं यावता कालेन जायते हीयते वा तावत्कालपर्यन्तमेका तिथिरित्यन्तरलक्षणम् । तदुक्तं विष्णुधर्मोत्तरे—

आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदा ।
चन्द्रमाः स्यात्तदा राम तिथिरित्यभिधीयते ॥ इति ।

तथा चन्द्रस्यैका कला यावता कालेन प्रपूर्यते हीयते वा तावत्कालपर्यन्तमेका तिथिरिति कलालक्षणम् । तदेतद्विस्पष्टमभिहितं कालमाधवग्रन्थे माधवाचार्यैः । तिथिशब्दस्तनोतेर्धातोर्निष्पन्नः । तनोति विस्तारयति वर्धमानां क्षीयमाणां वा चन्द्रकलामेकां यः कालविशेषः सा तिथिः । यद्वा यथोक्तकलया तन्यत इति तिथिः । तदुक्तं सिद्धान्त-शिरोमणौ—

तन्यन्ते कलया यस्मात्तस्मात्तास्तिथयः स्मृताः । इति ।

स्कान्देऽपि—अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोडशैव वरानने ॥ इति ।

पुरुषार्थचिन्तामणावप्युक्तम्—ऊर्ध्वप्रदेशवर्तिमन्दगामिसूर्यस्याधःप्रदेशवर्ती शीघ्रगामी चन्द्रः । तयोर्गतिविशेषवशाद्दर्शे सूर्यमण्डलस्याधोभाग एव चन्द्रस्यावस्थितिर्भवति । तदा सूर्यरश्मिभिरभिभूतत्वाच्चन्द्रमण्डलमीषदपि न प्रकाशते । ततो दर्शोत्तरकाले चन्द्रः शीघ्रगामित्वात्त्रिंशदंशोपेतराशौ सूर्याधिकरणकराश्यंशं त्यक्त्वाऽग्रिमांशं गच्छति । एवं क्रमेण त्रयोदशांशप्रवेशक्षणे चन्द्रस्य प्रथमकला दर्शनयोग्या भवति । सूर्याधिकरणकराश्यंशादग्रिम-त्रयोदशांशप्रवेशस्त्वतिशीघ्रगतौ चतुष्पञ्चाशता घटिकाभिर्भवति । अतिमन्दगतौ पञ्चषष्ट्या घटिकाभिर्भवतीति । नन्वत्र गतौ शैघ्र्यं मान्द्यं च कथमुक्तम् । चन्द्रस्य गतिर्ह्येकविधैव भवितुमर्हति । सत्यम् । भूमण्डलस्थजनदृष्ट्या चन्द्रस्य गतौ तारतम्यं लक्ष्यत इत्यभिप्रायेण तत्र तथोक्तम् । वस्तुतश्चन्द्रस्य गतिरेकविधैव । राश्यंशानामल्पत्वमहत्त्ववशात्तु गति-तारतम्यं भासते । तथाहि । यथा रथचक्रे मध्यकर्णिकामारभ्य नेमिपर्यन्तं तिर्यक्काष्ठान्यरसंज्ञकानि प्रदीयन्ते । तत्र द्वयोः काष्ठयोरन्तरं कर्णिकासमीपे स्वल्पमेव । उत्तरोत्तरं च तदन्तरमधिकं भवन्नेमिसमीपे महदन्तरं भवति । तथा भूमण्डलमारभ्याश्विनीम-भरण्यादिनक्षत्रपर्यन्तं प्रतिनक्षत्रमेकं सूत्रं काष्ठस्थानीयं प्रकल्पनीयम् । द्वयोः सूत्रयोरन्तरं च भूमण्डलसमीपे स्वल्पमेव । उत्तरोत्तरं च तदधिकं भवन्नक्षत्रसमीपे महत्तरमन्तरं भवति । सूत्रयोरन्तरे प्रकल्पिता द्वादशांशाश्चान्तरानुसारेण स्वल्पा महान्तो

महत्तराश्चोत्तरोत्तरं भवन्ति । यदि च भूमण्डलसंनिकृष्टेन प्रदेशविशेषेण भूमण्डलस्याभितश्चन्द्रमण्डलं परिभ्रमेत्तर्हि चन्द्रस्य द्वादशांशगतेर्न षष्टिघटिकापरिमितस्ततः ईषन्न्यूनो वा कालोऽपेक्षितः स्यात् । किंतु द्वादशांशगतिर्द्वादशघटिकाभिस्ततोऽपि न्यूनेन वा कालेन भवेत् । तथा यदि सूर्यमण्डलसंनिकृष्टेन प्रदेशविशेषेण भूमण्डलस्याभितश्चन्द्रमण्डलं परिभ्रमेत्तदा चन्द्रस्य द्वादशांशगतिर्न षष्टिघटिकाभिरीषदधिकाभिर्वा संपद्येत । किंतु सूर्यस्येव चन्द्रस्यापि द्वादशांशगतिर्द्वादशभिर्दिनैः स्यात् । अतोऽवश्यं भूमण्डलाद्विप्रकृष्टः सूर्यमण्डलात्त्वतीव विप्रकृष्टः कश्चन भूमण्डलसूर्यमध्यगतः प्रदेशविशेषश्चन्द्रगमनयोग्य ऊर्ध्वमधश्च मर्यादितस्तथा प्रकल्पनीयो यथा तादृशप्रदेशगतेनोर्ध्वभागेन चन्द्रस्य गतावपि द्वादशांशगतिरायम्येषदधिकसप्तषष्टिघटिकाभिः स्यात् । नतु कथमपि ततोऽधिकेन कालेन । तथा तादृशप्रदेशगतेनाधोभागेन चन्द्रस्य गतावपि द्वादशांशगतिरायम्येषन्न्यूनपञ्चाशद्घटिकाभिः स्यात् । नतु कथमपि ततो न्यूनेन कालेन । अयं च द्वादशांशगतेः कालावधिर्विद्यारण्यादिभिः प्राचीनैर्निबन्धकारैरुक्त एव । कदा द्वादशांशगतिः कियता कालेन भवेदिति निर्णयस्तु बीजसंस्कारसहायेन गणकैः कार्यः ।

अत्रेदं बोध्यम् । यथा अश्विन्यां सूर्ये भरणीसूत्रे आमूलाग्रं यत्र क्वापि चन्द्रमा अस्तु सूर्यचन्द्रयोर्द्वादशांशमन्तरं नियतमेव भवति । न तथा तत्र सर्वत्र चन्द्रस्यैककलापूर्तिर्नियता भवति । भरणीसूत्रे सूर्यसंनिकृष्टे प्रदेशे चन्द्रमाश्चेत्स भूमण्डलस्थजनदृष्ट्याऽष्टम्यामिव दृश्येत । तत्रैव च सूर्ये तस्मिन्नेव च सूत्रेऽधोभागे भूमण्डलसंनिकृष्टे प्रदेशे चन्द्रमाः स्याच्चेत्तस्यैकाऽपि कला कृत्स्ना न दृश्येत । अतश्चान्तरसूत्रान्तर्गतो यश्चन्द्रगमनयोग्यः प्रदेशस्तत्र यथा यथा चन्द्रमा ऊर्ध्वभागेनाधोभागेन वा गच्छेत्तथा तथा तदीयकलायाः सूक्ष्मेणांशेन वैषम्यं दुर्निवारमेव भवति । अन्तरसूत्रं यथा भूमण्डलमारभ्य तत्तन्नक्षत्रपर्यन्तं प्रकल्पितं तथा कलासूत्रं प्रकल्पनीयं चेदूर्ध्वं सूर्यमण्डलसंनिकृष्टपार्श्वप्रदेशाभिमुखमधश्च भूमण्डलसंनिकृष्टपार्श्वप्रदेशाभिमुखं चन्द्रगमनयोग्ये प्रदेशे प्रकल्पनीयम् । यस्मिन्सूत्रे आमूलाग्रं यत्र क्वापि स्थिते चन्द्रमसि द्वादशांशान्तरं नियतं भवति तदन्तरसूत्रमित्यभिधीयते । तथा यस्मिन्सूत्रे यत्र क्वापि स्थिते चन्द्रमसि चन्द्रस्य कृत्स्ना कला प्रपूर्यते न त्वीषदपि न्यूनाधिक्यं भवति तत्कलासूत्रमित्युच्यते । अन्तरसूत्रकलासूत्रयोः संपातबिन्दुश्च चन्द्रगमनयोग्ये प्रदेशे भवति । संपातबिन्दोरधोऽन्तरसूत्रस्थे चन्द्रे सूर्यचन्द्रयोर्द्वादशांशान्तरे जातेऽपि न कलापूर्तिः । यथा यथाऽधोभागे चन्द्रः स्यात्तथा तथा कलापूर्तावधिककालापेक्षा स्यादेव । यथा यथा च संपातबिन्दोरूर्ध्वभागे चन्द्रः स्यात्तथा तथा कलापूर्तिर्द्वादशांशात्पूर्वमेव स्यात् । तत्रोर्ध्वभागेन गच्छति चन्द्रे तिथयो वृद्धिगामिन्यो भवन्ति । उपर्युपरि सूत्रद्वयमध्यगतमन्तरमधिकं भवतीति तदनुसारेणैकस्मात्सूत्रादपरसूत्राक्रमणे कालाधिक्यस्याऽऽवश्यकत्वात् । अधोभागेन गच्छति चन्द्रे तु तिथयः क्षयगामिन्यो

भवन्ति। उत्तरोत्तरमन्तरस्य न्यूनत्वेनैकस्मात्सूत्रादपरसूत्राक्रमणस्याल्पेनैव कालेन संभावितत्वात्। द्वादशांशान्तरगतेर्न्यूनः काल आयम्य पादोनपञ्चाशद्घटीपरिमितः, अधिकः कालश्चाऽऽयम्य सपादसप्तषष्टिघटीपरिमितो भवति। कलावृद्धिस्तु द्वादशांशान्तरसमकालमेवेति न नियमः। कदाचिद्द्वादशांशान्तरात्पूर्वमपि भवति कदाचिद्द्वादशांशान्तरादधिकेनापि कालेन भवति। तिथीनां वृद्धिगामित्वे सूर्यचन्द्रयोर्द्वादशांशान्तरं षष्टिघटिकापेक्षया यावताऽधिकेन कालेन भवति न तावानधिकः कालः कलावृद्धेरपेक्ष्यते। यदि घटिकानां द्विषष्ट्या द्वादशांशान्तरं भवेत्तदा पादोनद्विषष्ट्याऽपि कलावृद्धिर्भवेत्। तथा घटिकानां सप्तषष्ट्या यदि द्वादशांशान्तरं भवेत्तदा पञ्चषष्ट्यैव कलावृद्धिर्भवेत्। तिथीनां क्षयगामित्वे तु सूर्यचन्द्रयोर्द्वादशांशान्तरं षष्टिघटिकातो यावता न्यूनेन कालेन भवति न तावता न्यूनेन कालेन कला प्रपूर्यते। किं त्वीषदधिकः कालस्तत्रापेक्ष्यते। यदि सप्तपञ्चाशता द्वादशांशान्तरं भवेत्तदा अष्टपञ्चाशता कलावृद्धिर्भवेत्। यदि पञ्चाशता द्वादशांशान्तरं भवेत्तदा चतुष्पञ्चाशता कलावृद्धिर्भवेत्। तथा चैकया कलयैका तिथिरिति कलानुरोधेन तिथेर्लक्षणेऽङ्गीकृते बाणवृद्धिरसक्षयप्रवादः सत्य एव भवति।

अथ कलावृद्धेः किं स्वरूपं येन द्वादशांशान्तरस्य कलावृद्धेश्च कालत ईषद्वैषम्यं जायत इति चेदुच्यते। चन्द्रो हि गोलाकारः कन्दुकवद्वर्तुलः। स चोर्ध्वमधः पार्श्वतो वा यत्र क्वापि स्थितेन जनेन प्रेक्ष्यते चेत्तदर्धमेव वर्तुलाकारं दर्शनयोग्यं भवति न त्वीषदप्यधिकम्। अर्धवर्तुलस्यैवाभिमुखत्वात्। अमावास्यान्तिमक्षणे सूर्यभूमण्डलमध्यस्थितश्चन्द्र इति तत्रत्यं यदर्धवर्तुलं सूर्यमण्डलाभिमुखं न तदंशेनापि भूमण्डलाभिमुखं भवति यच्चार्धवर्तुलं भूमण्डलाभिमुखं न तदंशेनापि सूर्याभिमुखं भवति। सूर्यमण्डलाभिमुखमर्धवर्तुलं प्रकाशितं भवति, अनभिमुखं चार्धवर्तुलमप्रकाशितं भवति। एष च सदैव नियमोऽमावास्या वा भवतु पौर्णमासी वा भवत्वन्या वा काऽपि तिथिर्भवतु। चन्द्रमण्डलं चामावास्यानन्तरं सूर्यभूमण्डलमध्यतः प्राच्या निर्गतं सत्क्रमेण भूमण्डलस्य तिर्यक्पार्श्वतः पृष्ठतश्च भवति पौर्णमासीपर्यन्तम्। तदा च सूर्यमण्डलाभिमुखं प्रकाशितमर्धवर्तुलमंशांशेन भूमण्डलाभिमुखं भवति। एवं शनैः शनैरधिकं भूमण्डलाभिमुखं भवत्कार्त्स्न्येन तदभिमुखं पौर्णमास्यन्ते भवति। सूर्यमण्डलाभिमुखप्रकाशितार्धवर्तुलान्तर्गतैका कला यदा भूमण्डलस्थजनदृष्ट्या दर्शनयोग्या भवति तदा शुक्लप्रतिपत्समाप्तिः। कलाद्वयस्य तथात्वे द्वितीयासमाप्तिः। एवं च कलावृद्धिर्यत्प्रकाशितकलाया दर्शनयोग्यतासंपत्तिः। चन्द्रमण्डलावस्थितिस्तु सदैकरूपैव प्रकाशितार्धवर्तुलाऽप्रकाशितार्धवर्तुला चेति प्रागुक्तम्। अत्रेदमवधेयम्। भूमण्डलमारभ्य सूर्यमण्डलपर्यन्तं प्रकल्पितस्य प्रथमसूत्रस्य समान्तरेण द्वादशांशान्तरे यद्द्वितीयं सूत्रं प्रकल्पितं तस्मिन्सूत्रे ओतश्चन्द्रमण्डलाकारः कश्चन गोलोऽधःप्रदेशमारभ्योर्ध्वप्रदेशपर्यन्तं नीतश्चेत्तादृशगोलस्याधोगतमर्धवर्तुलं यावतांऽशेन सूर्यमण्डलाभिमुखं भवेत्तदपेक्षया नियमत ईषदधिकेनांशेन तदेवार्धवर्तुलमूर्ध्वप्रदेशगतं

शनैः शनैः सूर्यमण्डलाभिमुखं भवेत् । तथा च चन्द्रस्य द्वादशांशान्तरगतेरेककलावृद्धेश्च न कालतः साम्यमेव सर्वदेति नियम इति । तथा च द्वादशांशान्तरं यद्यपि पञ्चाशद्घटिका आरभ्य सप्तषष्टिघटिकापर्यन्तं कियताऽपि कालेन भवेत्तथाऽपि कलाप्रपूर्तिश्चतुष्पञ्चाशद्घटिका आरभ्य पञ्चषष्टिघटिकापर्यन्तमेव कियताऽपि कालेन भवेत् । तदुक्तं ज्योतिर्विदाभरणे —

'वृद्धिक्षयौ स्तः परमौ तिथौ सदा व्यर्धा रसाः साङ्घ्रिरसाश्च नाडिकाः' । इति ।

एतन्मूलक एव बाणवृद्धी रसक्षय इत्युद्घोषः पूर्वेषाम् ।

नन्वेवं द्वादशांशान्तरकलाप्रपूर्त्योः कालतो वैषम्ये तिथीनां क्षयगामित्वे कदाचिदन्तरलक्षणायां तिथौ समाप्तायामपि कलालक्षणाऽवतिष्ठेत । तथा तिथीनां वृद्धिगामित्वे कदाचित्कलालक्षणायां तिथौ समाप्तायामप्यन्तरलक्षणाऽवतिष्ठेत । तदा कर्मकालव्याप्तिः कीदृशीं तिथिमनुसृत्य निर्णेया भवति । यथा चैत्रशुक्लाष्टमी कलालक्षणा पूर्वेद्युः घ० ९ परेद्युर्नवमी च घ० १४ । अन्तरलक्षणा च पूर्वेद्युरष्टमी घ० १० परेद्युर्नवमी घ० १७ । एवंविधे विषये पञ्चदशघटिकासमाप्तिक्षणरूपे मध्याह्ने परेद्युर्नवमीव्याप्तिर्ग्रहीतव्या न वा ।

उच्यते । दैवेषु पित्र्येषु वा सर्वेष्वेव कर्मसु तिथेः कर्मकालव्याप्तिनिर्णयः कलालक्षणेनैव कर्तव्यो भवति । तिथिविशेषवाचकाः प्रतिपद्द्वितीयादिशब्दास्तत्तत्कलास्वरूपपुरस्कारेणैव तं तं तिथिविशेषमभिदधति । चन्द्रस्य प्रथमया कलया वर्धमानया क्षीयमाणया वोपलक्षितः कालः प्रतिपच्छब्दाभिधेयः । तादृशया द्वितीयया कलयोपलक्षितः कालो द्वितीयाशब्दाभिधेयः । एवमग्रेऽपि । किंच तन्यते कलया याऽसौ तिथिः प्रोक्ता मनीषिभिरिति तिथिशब्दस्य निर्वचनमपि कलालक्षणानुसार्येव । किंच पितॄणां निवासश्चन्द्रलोक इति प्रसिद्धिः । तथा च पित्र्यं कर्म तत्तत्कलोपलक्षितकाल एव भवितुमर्हति । किंच भूमण्डलं कर्मभूमिः । तत्र च कलानामेव किरणद्वारा संबन्ध इति ता एव कर्मकर्तुरदृष्टविशेषाधायिका भवेयुः । नतु सूर्यचन्द्रयोरन्तरं कथमपि तत्र विशेषमाधातुं प्रभवति । अन्तरस्य कलाप्रणाड्यैव भूमिसंबन्धो व्यक्तव्यो भवति नतु कथमपि स्वातन्त्र्येण । तथाचान्तरलक्षणं दृक्प्रत्ययोपयोगिकालनिर्णय उपयुक्तं भवतु नतु विशेषाधायके तिथिव्याप्तिनिर्णये तदुक्तं विष्णुधर्मोत्तरे—

यन्त्रवेधादिना ज्ञातं यद्बीजं गणकैस्ततः ।
ग्रहणादि परीक्षेत न तिथ्यादि कदाचन ॥ इति ।

तथा च संकष्टचतुर्थ्यां चन्द्रोदये चतुर्थीव्याप्तिर्विशेषाधायिका कलालक्षणेनैव निर्णेया । चन्द्रोदयकालस्त्वन्तरलक्षणेन निर्णेयः । दृक्प्रत्ययस्य सूर्यचन्द्रान्तरविशेषानुसारित्वात् । एवं दृक्प्रत्यययोग्यग्रहणयुत्युदयास्तमयकालनिर्णये ज्ञेयम् । एतत्तत्त्वं सुधीभिर्विचार्य निर्णेयमिति दिक् ।

इति म० म० वासुदेवशास्त्रिप्रणीतो धर्मतत्त्वनिर्णयः ।